66. नोदकुम्भ[1]हस्तोऽभिवादयेन्न भैक्षं[2] चरन्न[3] पुष्पा-ज्यादि[4]हस्तो नाशुचिर्न जपन्न[5] देवपितृकार्यं कुर्वन्न शयानः।

[ भैक्षचर्या ]

67. शङ्खः याचयेद्याचितं चान्नं त्रिधा कृत्वैकभागकम्।
असौ व्याहृतिभिः स्थाप्य भागमेकं गुरोरपि॥
एकं भुञ्जीत मतिमान् चाध्यायं च ततः पठेत्।
सायं प्रातस्ततो भिक्षेत्सायं प्रातस्तु भोजनम्॥

[ कमण्डलुधारणम् ]

68. लिखितहारितौ दक्षिणपार्श्वे कमण्डलुधारणमुक्तं दृष्टार्थतया संगच्छेते।

[ ब्रह्मचारिवर्ज्याणि ]

69. शङ्खः तैलाभ्यङ्गं च ताम्बूलं मांसं कांस्ये च भोजनम्।
ब्रह्मचारी यतिश्चैव विधवा परिवर्जयेत्॥

[ पवित्रलक्षणम् ]

70. शङ्खः नीवीमध्ये स्थिता दर्भा ब्रह्मसूत्रे च ये धृताः।
पवित्रांस्तान्विजानीयाद्ये तु कर्णे च दक्षिणे॥

---

66. आ०सा०गदा० (II), p. 148 [1 om. हस्तो; 3 om. न, and reads as पुष्पाज्यपाणिर्वा शुचिर्न जपन्न देवपितृकार्यं कुर्वन्]; आचारेन्दु त्र्य०, p. 164, [2 भिक्षां; 4 om. [आ] दि]; कृ०क०ल० (I) p. 195 [4 पुष्पादिपाणिः; 5 न परिषन्मध्ये स्वैरवाक्]; गो०ध०सू० (परि०) 2 अ० 17, p. 80; प०सं०मा० (V.I.1), p. 329 [2 भैक्ष्यं; 4 पुष्पान्नहस्तो]; म०पा०मद० (IX), p. 961. [2 भैक्षहस्तो न पुष्पाज्यहस्तो]; वी०मि०मि०मि० (संस्कार), p. 464 [as कृ०क०ल०, p. 195]; या स्मृ०मि० III.293, p. 320; स्मृ०च०दे० (I), p. 39, [4 पुष्पान्न हस्तो]; स्मृ०मु०वै०, p. 109, [4 om. (आ) दि०; 5 om. जपन्न].

67. आ०प्र०क०, fol. 110; वी०मि०मि०मि० (संस्कार), p. 487, [om.1.4].

68. या०स्मृ०वी०मि०मि०मि०, I. 17, p. 36.

69. आ०सा०गदा०, p. 227.

70. आ०र०ल०, p. 125.



[ उपाध्यायलक्षणम् ]

71. शङ्खः भृतकाध्यापको यस्तु स उपाध्याय उच्यते।

[ गुरुपूजनमहिमा ]

72. शङ्खः न स्नानेन न होमेन नैवाग्निपरिचर्यया।
ब्रह्मचारी दिवं याति स याति गुरुपूजनात्॥

[ गुरूणां सम्माननम् ]

73. शङ्खलिखितौ न मातापित्रोरन्तरमि[1]च्छेत्पुत्रः कामं मातुरेवानु[2]ब्रूयात्। सा हि धारिणी पोषणी च। न पुत्रः[3] प्रतिमुच्येतान्यत्र सौत्रामणीयागा[4]ज्जीवन्नृणान्मातुः।

74. शङ्खलिखितौ अत्याज्या माता तथा पिता सपिण्डाः गुणवन्तः सर्व एव अत्याज्याः।[1] यस्त्यजेत्कामादपतितान्स दण्डं प्राप्नुयाद्द्विगुणं शतम्। न मातापितरावतिक्रामेन्न गुरुं त्रयाणां व्यतिक्रमादङ्गच्छेदः।[3]

---

71. सं०मं०शं०, p. 31; स्मृ०च०रे० (I), p. 34; स्मृ०मु०वै०, p. 104.

72. सं०मं०शं०, p. 29; स्मृ०च०दे० (I), p. 44.

73. कृ०क०ल० (XII), p. 561 [1 गच्छेत् and om. पुत्र; 2 [अ] नुयायात्]; धर्म०ल०, p. 1612 [2 यत् (for (अ) नुब्रूयात्).]; वी०मि०मि०मि० (संस्कार), p. 479; वि०र०च०, p. 357, [2 as धर्म०ल०, om from न पुत्रः upto मातुः]; स्मृ०च०दे० (I), p. 35 [om. upto पोषणी च]; स्मु०मु०वै०, p. 105 [om. upto पोषणी च; 3 पितुर् (for प्रतिम्).]; हि०लो०गं०, p. 523, [कामं पोषणीया].

74. कृ०क०ल० (II), p. 418 [reads upto अत्याज्याः]; कृ०क०ल० (XII), p. 561 [adds एवं in the begining; 3 अतिक्रमेऽङ्गच्छेदः]; गृ०र०च०, p. 590 [reads upto अत्याज्याः]; धर्म०ल०, p. 1612-1613 [as कृ०क०ल० (XII), p. 561]; या०स्मृ०अ० II. 238, p. 823 [1 वा (for एव).]; वि०र०च०, p. 357 [begins with एवं; 2 om. गुणं]; हि०लो०गं०, p. 523, [1 वात्याज्याः यस्त्यजेत्कामाद्; adds तान् before स; om. from न माता upto °च्छेदः].

75. शङ्खः अथ मान्याः माता-पिता पितुर्भार्या ज्येष्ठो[1] भ्राता ज्येष्ठभगिनी ज्येष्ठशालः पितुः सखा गुरुराचार्यः[2] पितृव्यो मातुलश्च श्वश्रुश्वशुरवृद्धाः।

76. शङ्खलिखितौ उपशिक्षितानि चास्य न कुर्वीतान्यत्राचारात्। न वाशिष्टकथाभिरभिवदेत्।

77. शङ्खलिखितौ आसनशयनेषु नैकस्तिष्ठेदन्यत्र यज्ञसंसारशिबिकावाहनशकटोपयानाभ्युदयेभ्यः।

[ वेदाध्ययनश्रैष्ठ्यम् ]

78. शङ्खः न वेदमधीत्यान्यां[1] विद्यामधीयीतान्यत्र[2] वेदाङ्गस्मृतिभ्यः[3]।

[ अनध्यायाः ]

79. शङ्खः उपाध्याये राजनि च श्रोत्रिये च मृते सब्रह्मचारिणि चन्द्रार्कयोः।

80. शङ्खः राहुदर्शने शक्रध्वजप्रपतने[1] आचार्ये च[2] मृते त्रिरात्रम्।

81. शङ्खः अष्टम्याः प्रदोषे।

82. शङ्खलिखितौ कामतो वास्मिन्नेव स्वाध्यायः। प्रयोजनापेक्षी गायत्रीरुद्रकल्पोपनिषत्स्वभिरतः।

---

75. कृ०क०लं० (I), p. 198; नि०प्र०नृ०, p. 577 [2 पितुः (for गुरुः).]; वी०मि०मि०मि०, p. 470 [1 om. ज्येष्ठ].
76. कृ०क०ल० (I), p. 216.
77. कृ०क०ल० (I), p. 222.
78. आ०सा०गदा० (II), p. 205 [1 वेदमधीत्यनान्यां]; कृ०क०ल० (I), p. 262, [adds in the begining न शास्त्रमफलं कुर्यात्]; या०स्मृ०बा० I.99. p. 322 [3 श्रुतिभ्यः]; वी०मि०मि०मि० (संस्कार), p. 155 [2 °न्या; 3 श्रुतिभ्यः]; & p. 511; स्मृ०च०दे० (I), p. 48; स्मृ०त०र०, p. 346; स्मृ०मु०वै०, p. 115, [3 वेदाङ्गेभ्यः].
79. च०चि०हे० (परि०), p. 756.
80. च०चि०हे० (परि०), p. 756; प्र०पा०नृ०, p. 266 [1 om. प्र० in प्रपतने; 2 आचार्यप्रतने]; वी०मि०मि०मि० (संस्कार), p. 531, [2 प्रमिते]; सं०म०शं०, p. 39; स्मृ०च०दे० (I), p. 57, [2 च प्रमृते].
81. वी०मि०मि०मि० (संस्कार), p. 528.
82. कृ०क०ल० (I), p. 273.



सवनोपस्पर्शी शेषवृत्तिसंबन्धत्वेनोक्तमुपासीत्। आत्मरतिर्गुरुकुलनिष्ठ आत्मनिष्ठो वा। सोऽमृतत्वमाप्नोति।

83. शङ्खलिखितौ आहुताध्यायी पवित्राञ्जलिपाणिः सपवित्रं गायत्रीमनुश्राव्य गुरोरभिमुखं स्वाध्यायमनुपठेत्।

84. शङ्खलिखितौ तपसा भावितात्मानः सत्यधर्मपरायणाः। ब्रह्मणैवोपसंपन्ना ब्राह्मणा ब्रह्मलौकिकाः।

85. शङ्खलिखितौ चतुर्विंशकमष्टाचत्वारिंशकं वा ब्रह्मचर्यम्। तद्गुरवे समाधेयम्। नैष्ठिकमात्मज्ञानसंस्थम्। पूर्वोत्तरयोरेकज्ञानमनारम्भत्वात्। आचार्यश्रान्तः। यन्त्री शुद्धिमाप्नोति।

86. शङ्खलिखितौ न च्यवने पुनस्तस्माच्छुद्धा धर्मतपोमयाः। लोकास्तेजोमयास्तेषां ये चरन्त्यूर्ध्वरेतसः॥

87. शङ्खलिखितौ उर्ध्वरेतस एवैके पारिव्राज्यमिच्छन्ति न गृहस्थवानप्रस्थौ। पूर्वस्यानुच्छेदादुभयधर्मोपपत्तेरुत्तरस्यानपेक्ष्यत्वादेकाश्राम्यम्।

88. शङ्खः निर्घातभूमिवेगोल्कपातदिग्दाहपांशुशोणितमांसास्थिकसदधिलाजगौरसर्षपेषु स्वस्त्ययनं कृत्वाभ्यञ्जनाक्रुष्टवानाश्रमदुःस्वप्नदर्शनेष्वेकोद्दिष्टसूतकमृतकेष्वाद्यं प्रायश्चित्तं कृत्वा ब्राह्मणगमनेष्ट्यादीति दत्त्वानुज्ञाप्याधीयीरन्।

89. शङ्खलिखितौ नावभृथयज्ञवाटौ। नापश्रूयतः। नेन्द्रचापदर्शनात्।

---

83. कृ०क०ल० (I), p. 246.
84. कृ०क०ल० (I), p. 267.
85. कृ०क०ल० (I), p. 267.
86. कृ०क०ल० (I), p. 267.
87. कृ०क०ल० (I), p. 267.
88. च०चि०हे० (परि०), p. 762.
89. कृ०क०ल० (I), p. 258.

90. शङ्खलिखितौ न नगरचतुष्पथमहापथसङ्गमेषु।

91. शङ्खलिखितौ न राजमहापुरुषाणां स्वर्याते। न वान्तः। न विरक्तः। नाजीर्णी। न कौमुद्याम्। न कुलमित्रेऽतीते।

92. शङ्खः नाधीयीताभियुक्तोऽपि यानगो न च गोत्रतः। देवायतनवल्मीकश्मशानवनसन्निधौ॥

93. शङ्खः राजत्सु च खरोष्ट्रेषु च गजेषु च हयेषु च।

94. शङ्खः अष्टमी हन्त्युपाध्यायं शिष्यं हन्ति चतुर्दशी। हन्ति पञ्चदशी मेधां तस्मात्पर्वाणि वर्जयेत्॥ आयुः प्रजां पशून्मेधां कृत्यानि सुकृतानि च। अनध्यायेष्वभ्यसतो ब्रह्म व्याहरतस्तथा॥

95. शङ्खः छिद्रेष्वेवावतिष्ठन्ति ये केचित्पुरुषादयः। तत्रस्था ब्रह्म ते घ्नन्ति ब्राह्मणैर्यदुपार्जितम्॥

96. शङ्खः रात्रीयामान्धकारे वा प्राणबाधाभये सति। यथा सुखं प्रकुर्वीत रात्रावहनि वा द्विजः॥

97. लिखितः छिद्राण्येतानि विप्राणां येऽनध्यायाः प्रकीर्तिताः। छिद्रेभ्यः स्रवति ब्रह्म ब्राह्मणेन यदर्जितम्॥

---

90. कृ०क०ल० (I), p. 257.

91. कृ०क०ल० (I), p. 258.

92. कृ०क०ल० (I), p. 259 [om.1.1]; च०चि०हे० (परि०), p. 753; पु०चि०वि०, p. 557; सं०म०शं०, 38.

93. कृ०क०ल० (I), p. 259.

94. कृ०क०ल० (I) p. 260.

95. कृ०क०ल० (I), p. 260; च०चि०हे० (परि०), p. 753 [reads 1.2.as तत्रस्था घ्नन्ति तद्ब्रह्म ब्राह्मणस्याल्पमेधसः]; वी०मि०मि०मि० (संस्कार), p. 537 [reads 1.2 as च०चि०हे०].

96. आ०प्र०क० fol 4.

97. कृ०क०ल० (I) p. 259 [reads 1.1 as छिद्राज्याहुर्द्विजातीनामनध्यायान्मनीषिणः]; च०चि०हे० (परि०), p 753; (second time) [past half of 12 is येनध्यायेष्वधीयते]; वी०मि०मि०मि० (संस्कार), p. 537; स्मृ०च०दे० (I), p. 61; स्मृ०मु०वै०, p. 39.



98. लिखितः तत्काले[1] तस्य रक्षांसि श्रियं ब्रह्म यशो बलम्। सर्वमादाय गच्छन्ति वर्जयन्तीप्सितं[2] फलम्॥

99. शङ्खः प्रजापतिर्हि तिष्ठति सर्वविद्यास्वपर्वसु। तस्माद्धर्मार्थकामो वै नैताः पर्वसु कीर्तयेत्॥

[ समावर्तनसमयः ]

100. शङ्खलिखितौ द्वादश द्वादश वर्षाणि वा प्रतिवेदं यावद्ग्रहणं वा वेदस्य तावद्ब्रह्मचर्यमाचरेत्।

[ स्नातकधर्माः ]

101. शङ्खः बालवृद्धमत्तोन्मत्तोपहतदेहभारा[1]क्रान्तस्त्री-स्नातकप्रव्रजितेभ्यः।

102. शङ्खः अथ ब्राह्मणायाग्रे पन्था[1] देयो राज्ञ इत्येके। तच्चानिष्टं गुरुर्ज्येष्ठश्च ब्राह्मणो राजानमतिशेते। तस्मै पन्था इति।

103. शङ्खलिखितौ पन्था देयो बालप्रव्रजितविद्याशिल्पगुणप्रकृष्टेभ्यः।

---

98. च०चि०हे० (परि०), p. 753; (second time) [post half of *l*. 2 is येनाध्यायेष्वधीयते]; वी०मि०मि०मि० (संस्कार), p. 537 & (second time [1 फलं (for काले); post half of *l*. 2 is येनाध्यायेष्वधीयते]; स्मृ०च०दे० (I), p. 61; स्मृ०मु०वै० p. 39 [2 च तत्फलम्].

99. कृ०क०ल० (I), p. 260.

100. च०चि०हे० (परि०), p. 779.

101. कृ०क०ल० (I), p. 204, [1 क्रान्तेभ्यः; om. further]; या स्मृ०मि० I.117, p. 33; या०स्मृ०वी०मि० I.116, p. 206, [प्रव्रजितेभ्यश्च]; वी०मि०मि०मि० (संस्कार), p. 476 [as कृ०क०]; स्मृ०च०दे० (I), p. 40; स्मृ०मु०वै०, p. 107 [1 adds नृप after स्त्री].

102. या०स्मृ०मि०, I. 117, p. 33; स्मृ०मु०वै०, p. 107 [1 om. देयो; adds देयः after पन्था at the ends].

103. कृ०क०ल० (I), p. 204, [reads as स्त्रियै गर्भिण्यै स्नातकप्रव्रजि °]; या०स्मृ०अ० I.11), p. 160; वी०मि०मि०मि०, p. 476 [as कृ०क०].

104. शङ्खलिखितौ पापरोगीगर्भिणीस्नातकप्रव्रजितविद्याविद्गुण-वृद्धेभ्यः पन्था देयः।

105. शङ्खः तुषकेशकरीषभस्मास्थिश्लेष्मनखलोमान्यप्सु न निक्षिपेन्न पादेन पाणिना वा जलमभिहन्यात्।

106. शङ्खलिखितौ नोद्धतकुहकैः[1] सहैकतस्तिष्ठेत्।

107. शङ्खलिखितौ नाहेः[1] पदमधितिष्ठेत्।[2] न तुषकपालकेश[3]भस्मास्थि-तृण[4]सङ्करकूटे तिष्ठेत्।

108. शङ्खलिखितौ नेन्द्रधनुश्चन्द्रसूर्यपरिवेषोल्काः[1] परस्मै कथयेत्। नात्मनः प्रतिकूलं न[2] महाजनविरोधं[3] कुर्यात्। [4]न गोष्ठीभिः सम्बध्यात्।

109. शङ्खलिखितौ न[1] परक्षेत्रागारे गां चरन्तीं पाययन्तीं चान्यस्मै कथयेत्। न गोब्राह्मणोपरोधे अश्नीयात्। न[2] वाह्यमाने वाह्यमीति ब्रूयात्।

110. शङ्खलिखितौ नोद्यन्तमा[1]दित्यमीक्षेत। नास्तं यान्तं आप्यायनं च। तस्मै विधिवत् विदधति[2]।

111. शङ्खलिखितौ न शिष्टानसत् कुर्यात्।

---

104. नि०प्र०, p. 524.

105. स्मृ०र०वे०, p. 207.

106. कृ०क०ल० (II), p. 373; गृ०र०च०, p. 557; नि०प्र०नृ०, p. 540; म०पा०प्रद०, p. 121 [1सहैकत्र]; या०स्मृ०अ० I.152, p. 194; वी०मि०मि०मि० (संस्कार), p. 577 [as म०पा०].

107. कृ०क०ल० (II), p. 374; गृ०र०च०, p. 558 [1 कुलम् (for पदम्); 3 भस्मकेशस्थि (by transt.); 4 संस्कारकूटेषु]; नि०प्र०नृ०, p. 541 [2 न केशपाल; 4 संस्कारकूटेषु].

108. कृ०क०ल० (II), p. 344; गृ०र०च०, p. 536 [3 प्रतिकूलं (for विरोधं).]; नि०प्र०नृ०, p. 508, [1 देवेन्द्र; 2 अलं (for न) 4 cm. न].

109. कृ०क०ल० (II), p. 346; नि०प्र०नृ०, p. 509, [1 नगक्षेत्रागारे धरन्तीं गां धपापयन्तीं न चक्षैतान्यस्मै].

110. कृ०क०ल० (II), p. 376; कृ०र०च०, p. 560 [1 °दित्यं वीक्षेत; 2 विदधीत].

111. कृ०क०ल० p. 397; गृ०र०च०, p. 576.



112. शङ्खलिखितौ न कूपश्वभ्राण्यातिष्ठेत्। न कूपमवलोकयेत्। न लङ्घयेत्।

113. शङ्खलिखितौ नाग्निं ब्राह्मणं च पादेनाधितिष्ठेत्।

114. शङ्खलिखितौ नाशुचिरग्निं परिचरेत्। न ऋषिपितृदेवताः कीर्तयेत्। नागाधोदकमवगाहेत। नापोञ्जलिना पिबेत्।

115. शङ्खलिखितौ नापोऽग्निं[1] चैकतो धारयेत्।

116. शङ्खलिखितौ आपत्स्वपि हि कष्टासु परस्वं कामयेत् न। नाभक्षं भक्षयेत्किञ्चिन्न पूर्वचरितं चरेत्॥ न स्त्रियं विवसनामीक्षेत्। न परपुरुषमन्यत्र स्वाभाव्यात्। .....न पादेन पादं प्रक्षालयेत्। न दर्भैः परिमृज्यात्। न महाजनविरोधं कुर्यात्। न गोष्ठीभिः सम्बध्येत्। न गणबन्धुसमवायं प्रविशेत्। न याज्यं याजयेत्। नानुयोगं प्रब्रूयात्। न ब्रह्म-विक्रयमिच्छेत्। न वाह्यमाने वाह्यगमिति ब्रूयान्न परिषन्मध्ये स्वैरवाक्स्यात्। नानियुक्तोऽग्रासनं गच्छेन्नाभ्याधिकं दद्यान्न प्रतिगृह्णीयात्। ........न दावम्......न दम्पत्योरन्तरम्। नर्षीणां प्रभवं न नदीनां न महात्मनाम्।

---

112. कृ०क०ल० (II), p. 379; गृ०र०च०, p. 562 [reads as तथा न कूपश्वभ्राण्यवलोकयेत्].

113. कृ०क०ल० (II), p. 405; गृ०र०च०, p. 581.

114. कृ०क०ल० (II), p. 405; गृ०र०च०, p. 581 [om. from नापो upto पिबेत्].

115. कृ०क०ल० (II), p. 405; गृ०र०च०, p. 581 [न गामग्नि]; या०स्मृ०अ० I. 154, p. 228.

116. कृ०क०ल० (II), p. 400 [reads only न भूमिं विलिखेत्। न पदाभिहन्यात्]; & p. 403 [न पादौ पादेन प्रक्षालयेत्। न दर्भैः परिमृज्यात्]; गृ०र०च०, p. 561 [न स्त्रियं विवस्त्रां न पुरुषमन्यत्र स्वाभाव्यात्]; & p. 578 [as कृ०क० p. 400]; & p. 580 [न पादं प्रक्षालयेत्। न दर्भैः परिमृज्यात्। न पादौ परिता- पयेत्। कुशेषु न परिमृजेत्। न कांसस्य भाजनेषु धावयेत्]; नि०प्र०नृ०वा०, p. 280 [न मद्यं दद्यात्। न प्रतिगृह्णीयात्]; p. 538 [reads only न पदा भूमिं हन्यात्]; & p. 579 [न पादं पादेन क्षालयेत्। न दर्भैः परिमृज्यात्]; या०स्मृ०अ० I.154. p. 224; स्मृ०मु०वैं०, p. 465 [1 च; 2 किंचिन्नाः upto पितृदेवताः कीर्तयेत्].

न मद्यं दद्यात्। न प्रतिगृह्णीयात्। न धर्मं ख्यापयेत्। नाधर्मं संवृत्तं कुर्यात्। नापसव्यं परिदध्यात्। न भूमिं विलिखेत्। न पादेनाभिहन्यात्। नाङ्गमुख-वादित्राणि कुर्यात्। न कूपश्वभ्राणि विलोकयेत्। न लोकविद्विष्टानि समाचरेत्। सर्वं विरुद्धं परिहरेत्।

117\. शङ्खलिखितौ अकर्तव्यं न कर्तव्यं प्राणैः कण्ठगतैरपि।
कर्तव्यमेव कर्तव्यं प्राणैः कण्ठगतैरपि॥

118\. शङ्खलिखितौ नैकोऽध्वानं प्रपद्येत नानुपातवग्ने। नाऽयज्ञोपवीती न शूद्रादिसहायः।

119\. शङ्खलिखितौ गोब्राह्मणसमवायेन्द्रकीलचतुष्पथान्यभिज्ञातांश्च वनस्पतीन् प्रदक्षिणानि कुर्यात्।

120\. शङ्खलिखितौ न रात्रौ विचरेत्। न ब्राह्मैरयुक्तैरपीतपानीयैः पिबेत्। न ग्रासमदत्त्वाश्नीयात्।

---

The sources and the variants are regarding the text given below which already appears in the main text.

[1]नानियुक्तोऽग्रासनं गच्छेत्। नाग्रासनस्थः प्रथममश्नीयात्।

आचारेन्दु त्र्य० p. 336 [only नाग्रासनस्थः पूर्वमश्नीयात्]; आ०त्र्य०, p. 325 [1 नानियुक्तोऽग्रासनस्थः]; कृ०क०ल० (IV), p. 191; छ०गो०श्री० p. 61; प०सं०मा० (V.I.1) p. 426 [as आ०त्र्य०]; या०स्मृ०अ० I.106, p. 150; स्मृ०च०रे० (I), p. 227.

The sources and the variants given here are regarding the part of the main text mentioned here.

नाधिकं दद्यान्न प्रतिगृह्णीयात्।

आ०त्र्य०, p. 325; कृ०क०ल० (IV), p. 191 [नाभ्यधिकं]; छ०गो० p. 61; प०सं०मा० (V.I.11), p. 423 [नान्त्याधिकं]; & p. 426; नृ०म०हल०, p. 160 [as प०सं०मा०, p. 423]; पा०गृ०सू० (परि०), p. 476 [as प०सं०, p. 423]; या०स्मृ०अ० I. 106, p. 150; स्मृ०च०हे० (III), p. 467; स्मृ०मृ०वै०, p. 808 [नात्यधिकं].

117\. स्मृ०मु०वै०, p. 455.

118\. कृ०क०ल० (II), p. 359.

119\. कृ०क०ल० (II), p. 314.

120\. कृ०क०ल० (II), p. 370; कृ०र०च०, p. 555.

# विवाहप्रकरणम्

## [ वर्णक्रमेण भार्याः ]

121\. शङ्खलिखितौ भार्याः[1] कार्याः सजातीयाः श्रेयस्यः सर्वेषां स्युरिति पूर्वः कल्पः, ततोऽनुकल्पः, चतस्रो ब्राह्मणस्यानुपूर्वेण, तिस्रो राजन्यस्य, द्वे वैश्यस्य, एका शूद्रस्य।

122\. शङ्खः ब्राह्मणी क्षत्रिया वैश्या ब्राह्मणस्य प्रकीर्तिता।
क्षत्रिया चैव वैश्या च क्षत्रियस्य प्रकीर्तिता।
वैश्यैव भार्या वैश्यस्य शूद्रा शूद्रस्य कीर्तिता।

123\. शङ्खः आपद्यपि न कर्तव्या शूद्रा भार्या द्विजेन[1] तु।
तस्यां[2] तस्य प्रसूतस्य[3] निष्कृतिर्नोपपद्यते॥[4]

## [ अनुलोमप्रतिलोमजाः तेषां कर्माणि ]

124\. शङ्खः समानवर्णासु पुत्राः समानवर्णा भवन्ति।
अनुलोमास्तु मातृवर्णाः प्रतिलोमास्तु विगर्हिताः॥

125\. शङ्खः विप्रायां नापिताज्जातो वेषुकः परिकीर्तितः।
राज्ञ्यां तु जनितस्तेन कर्मकारः स उच्यते॥

---

121\. दा०भा०जी०, p. 134; धर्म०ल०, p. 1024; वी०मि०मि०मि० (व्य०), p. 465 [1 om. कार्याः].

122\. हि०लो०गं० (II), p. 306.

123\. कृ०क०ल० (II), p. 41-42 [2 यस्मान्तस्यां; 4 विधीयते (for [उ]पपद्यते)]; गृ०र०च०, p. 36 [1 द्विजन्मना]; प्रा०वि०शू०, p. 362; या०स्मृ०वी०मि०मि०मि० I.56, p. 118 [4 विधीयते]; या०स्मृ०शू०, I.56, p. 8; वी०मि०मि०मि० (संस्कार), p. 749 [3 प्रस्तुतस्य (sec); 4 विधीयते].

124\. या०स्मृ०वा०, I-91, p. 281.

125\. या०स्मृ०बा०, I-91, p. 305.

विप्रायामुग्रतो जातस्तक्षवृत्तिः प्रकीर्तितः।
वैश्यायां तेन निष्पन्नः समुद्रो नाम जायते॥
"द्विजोत्तमायां दोष्यन्ताद्भगलब्धः प्रजायते।"
"ब्राह्मण्यां यो मुनिश्रेष्ठ वैदेहेन प्रजायते।
स नाम्ना रजको ज्ञेयः पण्डितैः पण्डितोत्तमाः॥"
"आयोगवेन ब्राह्मण्यां चर्मकारः प्रजायते।"
"द्विजोत्तमायां चाण्डालाद्यः पुमाञ्जायते भुवि।
श्वपचः स तु विज्ञेयः सर्वशास्त्रविशारदैः॥"
श्वपचाद्विप्रकन्यायां गुहको जायते सुतः।

॥उक्तं च॥

गुहकः श्वपचो भिल्लस्तक्षवृत्ती च नापितः।
रजकश्चर्मकारश्च बन्दिको वेणुकस्तथा॥
भगलब्धो बाह्यदासः इति चण्डाल संस्मृतः।

॥एवं ब्राह्मण्यामुक्त्वा क्षत्रियायामाह॥

क्षत्रवात्यान्नृपायां तु सल्लो मत्तश्च मल्लकः।
संज्ञात्रयमेकजातीयस्य।
मल्ला तु पिच्छिलस्तेन नटाख्यो जायते भुवि।
नटात्करणसंज्ञस्तु करणात्कर्मसंज्ञितः॥
तेन द्रमिल उत्पन्नो नृपायां वेदवित्तमाः।
नृपायां यो निषादेन जातोऽधो नापितः स्मृतः॥
नृपायां मागधाज्जातः खनकः परिकीर्तितः।
खनकाद्राजकन्यायामुद्बन्धो नाम जायते॥

॥अथ वैश्यायाम्॥

वैश्यव्रात्यात्तु वैश्यायां सुधन्वना जायते द्विजाः।
अनेनाचार्यसंज्ञस्तु भारुषो भारुषादपि॥
द्विजन्मा जायते तस्मान्मैत्रो मैत्रस्तु सात्वतः।



अवार्याख्यो भवति ततो भारुषस्ततो
द्विजन्मेत्याद्यर्थः॥
वैश्यायां तु निषादेन सुनिषादोऽभिजायते।
मणिकारस्तु वैश्यायां चौर्याद्वैश्येन जायते॥
वैश्यायां यस्तु चण्डालाज्जातो दन्तकवेणवः।
जनितस्तेन शूद्रायां विप्रां आश्रमिकः स्मृतः।

॥अथ शूद्रायाम्॥

चौर्याच्छूद्रेण शूद्रायां जातो मानविको भवेत्।
शूद्रायां मागधाज्जातः कुकुन्दः प्रोच्यते बुधैः॥
प्रतिलोमनिषादाद्यः शूद्राणां स तु भैरवः॥

॥अथ मैत्रायाम्॥

मैत्रायां वैदेहकात्तु जातो मातङ्गनामकः।
मातङ्गाज्जायते सूतः सूताद्दस्युः प्रजायते॥
दस्योर्जातो मुनिश्रेष्ठा मालाकारः समाख्यया।
प्रतिलोमनिषादेन कैवर्ताख्यो विजायते॥

॥अथ तैलिकायाम्॥

तैलिकारिस्त्रियां जातोऽयोगवेन द्विजोत्तमाः।
नीलादिवर्णविक्रेता नाम्ना वेदार्थवित्तमाः॥
कारुश्चाभूत्ततस्तस्यां जात्या ज्ञेयस्तथैव च।
कारौ चाभूत्समाख्याय निषादेन मुनीश्वराः॥
चर्मजीवी समुत्पन्नः सर्वविज्ञानसागराः।

126. शङ्खलिखितौ एवं वर्णे भेदः। प्रमादाद्दौर्बल्याच्च राज्ञस्तु किल्बिषं कर्तुर्यद्यापयेत् तेषां प्रतिनियतानि कर्माणि राज्ञा प्रतिपादनीयानि।

[ सगोत्रो वर्ज्यः ]

127. शङ्खापस्तम्बौ सगोत्राय दुहितरं न प्रयच्छेन्मातुश्च योनिसम्बन्धेभ्यः।

126. कृ०क०ल०, (xii), p. 829.
127. स्मृ०मु०वै०, p. 127.

## [ शूद्रानिषेधः ]

128. शङ्खः — तपस्वी धर्मशीलश्च[1] सर्वधर्मभृतां[2] वरः।
ध्रुवं शूद्रत्वमाप्नोति शूद्रश्राद्धे त्रयोदशे॥

129. शङ्खः — नीयते तु सपिण्डत्वं येषां शूद्रकुलोद्भवः।
सर्वे शूद्रत्वमायान्ति यदि स्वर्गो जितस्तु तैः॥

130. शङ्खः — सपिण्डीकरणं कार्यं कुलजस्य तथा ध्रुवम्।
श्राद्धद्वादशकं कृत्वा प्राप्ते श्राद्धे त्रयोदशे॥

131. शङ्खः — सपिण्डीकरणे[1] नार्हो न च[2] शूद्रस्तथा ध्रुवम्।[3]
तस्मात्सर्वं प्रयत्नेन शूद्रां भार्यां विवर्जयेत्॥

## [ ब्राह्मविवाहलक्षणम् ]

132. शङ्खलिखितौ तत्र सवर्णः सवर्णाय विदितो विदिताय यो[1] नग्निकां दद्यात् स ब्राह्मः।

---

128. कृ०क०ल०, (II), p. 42 [1 यज्ञ-(for धर्म-).]; गृ०र०च०, p. 36, [2 धर्मकर्म-(for सर्वधर्म-)]; प्रा०वि०शू०, p. 362; वी०मि०मि०मि० (संस्कार), p. 749.

129. कृ०क०ल० (II), p. 42; प्रा०वि०शू०, p. 362; वी०मि०मि०मि० (संस्कार), p. 749; षडशीति fol. 33.

130. कृ०क०ल० (II), p. 42, [श्राद्धे प्राप्ते (by transp.)]; प्रा०वि०शू०, p. 362.

131. कृ०क०ल० (II), p. 42 [1 करणानर्हो; 3 ध्रुवः]; गृ०र०च०, p. 36; प्रा०वि०शू०, p. 362 [1 करणस्यार्हो; 2 तु (for च).]; वी०मि०मि०मि० (संस्कार), p. 749-750 [as कृ०क०].

132. कृ०क०ल० (II), p. 79 [om. यो०]; गृ०र०च०, p. 66; या०स्मृ०वी०मि०मि०मि०, I. 58, p. 121 [om. तत्र & यो]; वी०मि०मि०मि० (संस्कार), p. 848, [1 adds एव before यो].



## [ आर्षविवाहलक्षणम् ]

133. शङ्खलिखितौ गोमिथुनेन वस्त्रयुगलेन चार्षः[1] सर्वेष्वलङ्कारः स्त्रीधनं च देयम्।

## [ प्राजापत्यविवाहलक्षणम् ]

134. शङ्खलिखितौ सत्पाद्यन्तयोरात्मानं च प्राजापत्यः पञ्चार्षः त्रीन्दैव[1] उत्तरेषु क्रियाप्राधान्यम्।

## [ असमानार्षगोत्रजां परिणयेत् ]

135. शङ्खः — अनुज्ञातो गुरुणा[1] मातापित्रोरनुमतो[2] दारानाहरेत्।

136. शङ्खः — दारानाहरेत्सदृशानसमानार्षेयान्[1] सम्बन्धानसप्तमपञ्चमान्पितृमातृबन्धुभ्यः।

137. शङ्खः — विन्देत विधिवद्भार्यामसमानार्षगोत्रजाम्।
मातृतः पञ्चमीं चापि पितृतस्त्वथ सप्तमीम्॥

138. शङ्खः — पञ्चमी वोभयतः।

## [ वर्णक्रमेण कन्यायाः हस्तादिग्रहणम् ]

139. शङ्खलिखितौ इषुं गृह्णाति राजन्यः। प्रतोदं वैश्यः। दशान्तं शूद्रः। ब्राह्मणस्तु सवर्णायाः पाणिं गृह्णीयात्।

---

133. कृ०क०ल० (II), p. 84; गृ०र०च०, p. 70, [1 om. च]; वी०मि०मि०मि० (संस्कार), p. 851.

134. कृ०क०ल० (II), p. 99; गृ०र०च०, p. 82 [1 न देवौ न]; वी०मि०मि०मि० (संस्कार), p. 865.

135. धर्म-ल. p. 1024; व्य०नि०व०, p. 375 [1 °गुरूणां; 2 °मते०].

136. उज्ज्वला (परि०) 5.11.16 आ०ध०ह० p. 144. [1 संबन्धाना]; या०स्मृ०वा०, I. 53, p. 192; स्मृ०मु०वै०, p. 125, [1 संबन्धान्सप्तमात्पितृ-].

137. वी०मि०मि०मि० (संस्कार), p. 704.

138. या०स्मृ०वि, I. 53, p. 62.

139. प०सं०मा० (V.I.11), p. 98.

## [ गृहस्थधर्माः ]

140. शङ्खलिखितौ वरयित्वा वरः कश्चिन्प्रणश्येत्पुरुषो यदा।
रक्तागमान् त्रीनतीत्य कन्याऽन्यं वरयेद्वरम्॥
[ प्रदाय शुल्कं ] गच्छेद्यः कन्यायाः स्त्रीधनं तथा।
धार्या सा वर्षमेकं तु देयान्यस्मै विधानतः॥
अथ प्रवृत्तिरागच्छेत् प्रतीक्षेत समात्रयम्।
अत ऊर्ध्वं प्रदातव्या कन्याऽन्यस्मै यथेच्छया॥

141. हारीतशङ्खलिखितयमैः
यज्ञियाः समिध आहृत्य सम्मार्जनोपलेपनोद्बोधन-समूहनसमिन्धनपर्यग्नीकरणपरिक्रमणोपस्थान-होमस्तोत्रनमस्कारादिभिरग्निं परिचरेन्नाग्निमधितिष्ठेन्न पद्भ्यां कर्षेन्न मुखेनोपधमेन्नापश्चाग्निं च युगपद्वार-येन्नाजीर्णमुक्तो नोच्छिष्टो वाभ्यादध्यात्। विविधै-र्हविर्विशेषैराग्नेयैरहरहरग्निं समिन्धेत्।[1] आमन्त्र्य गच्छेदाहृत्य[2] निवेदयेत् तन्मनाः। शरीरोपरमान्ते ब्रह्मणः सायुज्यं गच्छति।

142. शङ्खः नापसव्यं परिदध्यान्न च विकृतं वासः।

143. शङ्खः एतैरेव गुणैर्युक्तं धर्मार्जितं धनं तथा।[1]
याजयेत सदा विप्रो ग्राह्यस्तस्मात्प्रतिग्रहः॥

144. शङ्खःलिखितौ आहारं मैथुनं निद्रां संध्याकालेषु[1] वर्जयेत्।
कर्म चाध्ययनं[2] चैव तथा दानप्रतिग्रहौ॥

---

140. धर्म०ल०, p. 1024.
141. चतु०सं०भ० (संस्कार) p. 47-48 [1 इन्धेत; 2 आगत्य]; पं०सं०मा० (V.I.2), p. 49-50.
142. स्मृ०सा०वि०, p. 309.
143. कृ०क०ल० (II), p. 166 [1 यदा (for तथा); गृ०र०च०, p. 132; म०पा०मद०, p. 217.
144. च०चि०हे० (दान I), p. 78, [1 काले तु]; प०सं०मा० (V.I.1), p. 194 [2 अध्यापनं]; स्मृ०मु०वै० p. 47.



145. शङ्खलिखितौ नान्तरितां नावशिष्टां नाधिकां न समां[1]
न हीनां न कुत्सितां नानर्थकारीं वृत्तिं लिप्सेत्।

146. शङ्खः त्रैवार्षिकाधिकान्नस्तु पिबेत्सोममतन्द्रितः।
इष्टिं वैश्वानरीं कुर्यात्तथैवाल्पधनो द्विजः॥

147. शङ्खः सहस्रं भोजयेत्सोमे ब्राह्मणानां शतं पशौ।
चातुर्मास्येषु सर्वेषु शतं पर्वणि पर्वणि॥

148. शङ्खः इष्टिभिः पशुबन्धैश्च चातुर्मास्यैर्यजेत्तु यः।
अग्निष्टोमादिभिर्यज्ञैर्यजेत[1] च[2] स इष्टवान्॥
अग्निहोत्रं तपः सत्यं वेदानां चैव पालनम्।
आतिथ्यं[3] वैश्वदेवं च इष्टमित्यभिधीयते॥[4]
एकाग्निकादौ यत्कर्म त्रेतायां यच्च हूयते।
अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते॥
रोगिणां परिचर्या च पूर्तमित्यभिनिर्दिशेत्।

149. शङ्खलिखितौ अवाप्य वृत्तिं धर्मेण नित्यस्नायी प्रियातिथिः।
अग्निहोत्रपरस्सम्यग् गृहस्थो नावसीदति॥

150. शङ्खलिखितौ दाराना[1]कृत्याग्नाधेयपुनराधेयाग्निहोत्रदर्शपौर्ण-मासदाक्षायणचातुर्मास्यपशुसौत्रामण्यन्तैर्हविर्यज्ञैः सप्तभिर्यजेत्।

151. शङ्खः ज्येष्ठे तिष्ठत्यनूढे वा अग्निहोत्राधिकारिणि।
अनुज्ञया विनाधानं विवाहं नैव कारयेत्।

---

145. कृ०क०ल० (II), p. 228; गृ०र०च० p. 452; नि०प्र०नृ०, p. 326, [1 नासमां].
146. या०स्मृ०अ०, I. 125, p. 167; स्मृ०च०दे० (I), p. 159.
147. स्मृ०च०दे० (I), p. 159; स्मृ०मु०वै० p. 22.
148. च०चि०हे० (दान), p. 19-20; दा०क०क० fol 12 [om.l. 1 to l.6; 4 अभिधीयते]; दा०सा०द०नृ०प्र० fol. 7 [reads l.1 to l.4; 1 om. यज्ञैर्; 2 om. च; 3 आतिथ्यं]; शू०क०क०, p. 10, [om. l.1 to l.6; 4 अभिधीयते].
149. कृ०क०ल० (II), p. 127.
150. कृ०क०ल० (II), p. 117 [1 ना हत्या-]; गृ०र०च०, p. 95.
151. स्मृ०मु०वै०, p. 153.

152. शङ्खलिखितौ ऋत्विक् मन्त्रसमायुक्तो [1]यस्त्वौषधिगुणान्वितः।
यज्ञेन देवानाप्नोति यावन्नाप्नोति दक्षिणाम्॥
प्रत्याश्रमं स्थिता वर्णाः कर्मभिर्व्यक्ततां गताः।
नियमाचारधर्माणां ब्राह्मणस्तत्र देशकः॥
सम्पूज्यः सोऽर्चनीयश्च गुरुः संस्कारकर्मकृत्।
पूज्यो मधुपर्कादिना अर्चनीयो दक्षिणादिना॥
अग्नयस्तन्मुखाः सर्वे[2] देवाश्चाग्निमुखाः स्मृताः॥
ऋचो यजूंषि सामानि अथर्वाङ्गिरसानि च।
तानि विप्रेष्वधीतानि ते यज्ञा आप्तदक्षिणाः॥

153. शङ्खलिखितौ नाल्पसंभारो यजेत नापि संवत्सरवृत्तिरनिष्टं हि राष्ट्रे निपतत्यनिष्टं यज्ञसवनं यजमानं छेदयति।

154. शङ्खः सायं प्रातश्च जुहुयादग्निहोत्रं यथाविधि।

155. शङ्खः आज्यं द्रव्यमनोदेशे जुहोतिषु विधीयते।

### [ स्त्रीधर्माः ]

156. शङ्खः नानुक्ता[1] गृहान्निर्गच्छेत्। नानुत्तरीया। न त्वरितं[2] व्रजेत्। न परपुरुषमभिभाषेतान्यत्र[3] वणिक्प्रव्रजित-वृद्धवैद्येभ्यः। न नाभिं दर्शयेत्। आगुल्फाद्वासः

152. कृ०क०ल० (II), p. 135. [om. 1.6]; गृ०र०च०, p. 107-108 [1 पश्चौषधि; 2 वेदाश्च].

153. गृ०र०च०, p. 107.

154. च०चि०हे०, p. 816.

155. कृ०र०च०, p. 92.

156. कृ०क०ल० (XII), p. 523 [reads the parallel passage given below from begining to विद्विषेत्; and cont. [7 धूर्तचारिणी; 9 मायाविनी कुहकशीलाविलुप्ताभिः सहैव तिष्ठेत्; 12 दुष्येत्; om. आदिशन्ति]; कृ०स०अ०, p. 142, [1 नानुक्त्वा; 5 हसेदनावृत्तम्; 1०-कारिणि; om. from संसर्गेण upto स्यात्]; धर्म०ल०, p. 1025 [as कृ०क०; 7 as कृ०क०; 8 om. प्रव्रजिते; 9 मायाविनी कुहकशीला विलुप्ताभिः; म०पा०मद० II. p. 195 [1 नानुक्त्वा; 8 °प्रेक्षणिका-; 10 adds कारु before कारिका; 11 संसर्गे चारित्र्यं दुष्यति]; या०स्मृ०अ० I. 83. p. 108. [1 नानुक्त्वा; om. from न भर्तुः upto



परिदध्यात्। न स्तनौ विवृतौ[4] कुर्यात्। न हसेदनपावृतम्।[5] न भर्तारं न तद्बन्धून्वा विद्विषेत्। न [6]गणिकाधूर्ता[7]व्यभिचारिणीप्रव्रजिते[8]क्षणिका-मायामूल[9]मूलकुहककारिका[10]दुःशीलादिभिः सहैकत्र

स्यात्]; या०स्मृ०मि० I.87. p. 24, [1 नानुक्त्वा; 3 om. अभि-; 7 धूर्ताभिसारिणी; 8० जिता प्रेक्षणिका; 12 om. from [इ]त्यादिशान्ति to स्यात्]; या०स्मृ०वी०मि०मि०मि०, I. 86, p. 155-156 [reads from न परपुरुष; वधूरागुल्फाभ्यां; वासः परिधापयेत्; 6 द्विष्यात्; न गणिकाधूर्तादिभिः सहैकत्र तिष्ठेत्; om further]; वि०र०च०, p. 431 [reads from न गणिका; 8 cm. प्रव्रजिते; 9 as धर्म०ल०]; शू०क०क०, p. 64 [3 संभाषेत न नाभिः संदर्शयेदागु°; 6 द्विष्यात्; न गणिकाधूर्तादिभिः सहैकत्र तिष्ठेत्; om further]; सं०म०शं०, p. 75 [1 नानुक्त्वा; 3 om. अभि०; 5 न भर्तारं न द्विन्धून्वा द्विष्यात्; om further]; सं०रं०गो०दी०, p. 677 [begins from प्रेम्णा न त्वरितं व्रजेन्न परपुरुषं संभाषेत न हास्यं कुर्यादागुल्फा; 4 अनावृत्तौ कुर्यात्; न भर्तारं तद्बन्धून्वा द्विष्यान्न गणिकाधूर्तादिभिः सहैकत्र तिष्ठेत् om. further]; स्मृ०च०हे० II, p. 249 [reads from न गणिका upto दुष्यति; 7 धूर्ताचारिणि; 9 as धर्म०ल०]; स्मृ०मु०वै०, p. 156 [2 त्वरिता; 5 भर्तारं तद्बन्धून्वा न द्विष्यात्; 7 धूर्ताभिचारिणि; 9 प्रेक्षणिका; om. from इति upto स्यात्].

The parallel passage is found of this portion. some Mss. follow this. So here the passage is given and the variants of these Mss are also noted.

स्त्री [1]नानुक्ता बहिर्निष्क्रामेत्। [2]नानुत्तरीया परिधावेत्। [3]नानुत्सवे गन्धमाल्याभरणानि [4]विकृतानि वासांसि बभृयात्। न परपुरुषमभिभाषेत्। अन्यत्र[5] बालकप्रव्रजितवृद्धेभ्यः। न नाभिं दर्शयेत्। कुलवधूरागुल्फाभ्यां वासः परिदध्यात्। [6]न स्तनौ विवृतौ कुर्यात्। [7]न हसेतानावृत्तम्। कृ०क०ल० (XII), p. 622 [2 नानुन्तरीया; 5 वणिक्]; गो०सू०भ०ना०, p. 290 [reads from न नाभिं; 7 om. न हंसो upto जने]; धर्म०ल०, p. 1025 [1 परानुव्यक्तवक्त्रा (for नानुक्ता).; 6 गुल्फं]; या०स्मृ०वी०मि०मि०मि०, I.86. p. 155-156 [begins with नान्तराद्बहि °upto बिभृयात्]; या०स्मृ०शू० I.87. p. 12 [1 नानुक्त्वा; 2 °त्तरीयं; 3 नानुसेवेत; 4 om. from विकृतानि upto बिभृयात्; 7 हसेदनपावृत्तं सहजनैः]; वि०से०वि०, p. 285 [2 धापयेत्; 3 नाचोत्सवे; om न महाजने]; स्मृ०च०दे० (II) p. 249 [om. कुलवधूः; 7 हसेदनपावृत्तं]; स्मृ०त०र० (I). p. 896 [reads from न नाभिं to विवृतौ कुर्यात्].

तिष्ठेत्। संसर्गेण[11] हि चारित्र्यं दुश्यतीत्यादिशन्ति।[12]
न भर्तुः प्रतिकूलमाचरेत्। न प्रकीर्णभाण्डभोज-
नीयोपस्करद्रव्यानोत्थानखट्वासनपादुका स्यात्।

157. शङ्खाङ्गिरसौ तिस्रः कोट्यर्धकोटी च यानि रोमाणि[1] मानुषे।
तावत्कालं[2] वसेत्स्वर्गे भर्तारं यानुगच्छति॥
व्यालग्राही यथा व्यालं बलादुद्धरते बिलात्।[3]
तद्वदुद्धृत्य सा नारी सह तेनैव मोदते॥
तत्र सा भर्तृपरमा स्तूयमानाप्सरो गणैः।
क्रीडते पतिना सार्धं यावदिन्द्राश्चतुर्दश॥
ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वा भवेत्पतिः।
पुनात्यविधवा नारी तमादाय मृता तु या॥
मृते भर्तरि या नारी समारोहेद् हुताशनम्।
सारुन्धती समाचारा स्वर्गलोके महीयते॥
यावच्चाग्नौ मृते पत्यौ स्त्री नात्मानं प्रदाहयेत्।
तावन्न मुच्यते सा हि स्त्रीशरीरात्कथञ्चन॥

158. शङ्खः यस्मिन्भावोऽर्पितः स्त्रीणामार्तवे तच्छीलं[1] जनयति। यथा नीलवृषेण नीलवत्सप्रसवः। श्वेतेन श्वेत एव जायते। एवं योनिरेव बलवती। यस्माद्वर्णाः संकीर्यन्ते।

159. शङ्खः लोहितो यस्तु वर्णेन मुखे पुच्छे तु पाण्डुरः।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते॥

---

157. नि०अ० p. 250 [3 बलात्; om. last three sts.]; प०सं०मा० (V.II.1), p. 154 [reads only 5th st.]; या०स्मृ०मि० I. 86, p. 14 [only first st.; 1 लोमानि]; या०स्मृ०वी०मि०मि०मि०, I-85, p. 151 [1 लोमानि मानवे; 2 काले; om sts. 2 & 3].

158. कृ०क०ल० (XII), p. 507 [also एव (for भाव).]; धर्म०ल०, p. 1024 [1 पुत्रं (for शीलं)]; वी०मि०मि०मि०, p. 405, [1 तादृशं तन्तुं जनयति; om. further]; & p. 408 adds पुत्रं after ; शीलं]; वि०र०च०, p. 414 [1 adds पुत्रं after शीलं; जनयन्ति]; स्मृ०च०दे० (II), p. 241 [upto जनयति].

159. कृ०क०ल० (III), p. 472.



160. शङ्खलिखितौ कामचारिणीं मलिनां कुचेलां पिण्डमात्रोपजीविनीं निवृत्ताधिकारामधः[1]शय्यां निरुद्धां निवासयेदत्यर्थ-व्यभिचारिणीम्।

161. शङ्खलिखितौ श्वः श्वः पचनभाण्डानामुपलेपनम्।
सुसंमृष्टगृहद्वारोपलेपनम्।[1] कृतशौच्यानुकूल्यदध्य-क्षतदूर्वा[2]प्रवालपुष्पकृत[3]बलिकर्म श्वश्रुश्वशुरा[4]द्यभि-वादनानन्तरं[5] गृहावश्यकानि कुर्यात्। न देवभूत[6]-पतिभ्योऽग्रेऽश्नीयात् न भर्तुः अन्यत्र प्रतिकारौषधात्।

162. शङ्खलिखितौ न भर्तारं द्विष्याद्यद्यप्यष्ठीवलः[1] स्यात्। पतितोऽङ्ग-हीनो[2] व्याधितो वा। पतिर्हि दैवतं[3] स्त्रीणाम्। न व्रतोपवासनियमेज्यादानधर्मो[5] वाऽनुग्रहकरः[6] स्त्रीणामन्यत्र पतिशुश्रूषायाः।[7] कामं भर्तुरनुज्ञया[8] व्रतोपवासनियमेज्यादी[9]नामभ्यासः स्त्रीधर्मः।[10]

---

160. धर्म०ल० (व्य०), p. 1024 & p. 1390 [both 1 अधिकारमधः]; स्मृ०च०दे० (II), p. 242.

161. कृ०क०ल० (XII), p. 621 [4 om. आद्य; 5 [अ]नन्तरं; 6 also देवभृत्यातिथिभ्यः]; धर्म०ल०, p. 1024 [6 as कृ०क०]; वि०र०च०, p. 429; वि०से०वि०, p. 286 [om. श्वः; 1 स्वमृष्ट; 3 पुष्पाहृत; 4, 5 & 6 as कृ०क०]; स्मृ०च०दे० (II), p.•251 [6 °पूर्वं प्रवाल पूज्यबलिकर्म-श्वशुरयोरभिवादनम् महावश्यं कुर्यात्]; हि०लो०गं०, p. 511.

162. कृ०क०ल० (XII), p. 627, [also 6 ग्राहकः; 7 कर्मकर्तुः; 8 °ज्ञाताया-]; गौ०ध०सू०भ०ना०, p. 287 [om. स्त्रीणाम्; 4 adds च after न; 9 नियमादीनाम्]; & p. 288 [begins from कामं भर्तुरनुज्ञा]; धर्म०ल०, p. 1025 [6 ग्राहकः; 3 देवता-; 9 नियमादीनाम्]; च०चि०हे०, p. 176 [begins from कामं; 9 °वासादीनारभेत्]; प०सं०मा० (II.1), 38 [1 [अ] शील (for अष्ठीवलः); 2 अथहीनां; 3 अपि पतिर् (for पतिर्हि); 5-दानं दमो; 7 कामं तु; 9 नियमादीनाम्]; पु०चि०वि०, p. 253 [as च०चि०]; वर्ष०कौ०गो०, p. [begins from कामं]; स्मृ०च०दे० (II), p. 251 [3 देवता]; & p. 252 [begins from भर्तुर्; 10 आरभ्यः]; & p. 291 [10 आरम्भः स्त्रीधनम्]; स्मृ०त०र० (II), p. 36.

163. शङ्खलिखितहारीतउशनसबृहस्पतिव्यासाः
साध्वीनां स्त्रीणाम् अनुमरणमुक्तम्।

164. शङ्खः न व्रतेनोपवासेन धर्मेण विविधेन च।
नारी स्वर्गमवाप्नोति प्राप्नोति पतिपूजनात्।

165. शङ्खलिखितौ न वै स्त्रीणां व्रतं न मन्त्रक्रिया न कार्यम्।

166. शङ्खलिखितौ सर्वासां प्रोषिते भर्तरि[1] ब्राह्मणी चारित्र्यं रक्षेत्।
इतरासां मातापितरौ अनन्तरो[2] राजन्यो वा॥

167. प्रेङ्खाताण्डवविहारचित्रदर्शना[3]ङ्गरागोद्यानयान-विवृत[4]शयनोत्कृष्टपानभोजनकन्दुकक्रीडा[5]धूपगन्ध-माल्यालङ्कारदन्तधावनाञ्जनदर्शप्रसाधनादीनाम[6]-स्वतन्त्राणां प्रोषितभर्तृकाणां कुल[7]स्त्रीणामनारम्भः।

## [ अधिवेदनम् ]

168. शङ्खलिखितौ धूर्तां वैनाशिकीं स्त्रीजननीं वन्ध्यामप्रियवादिनीम्।

169. शङ्खः वन्ध्याष्टमेऽधिवेद्याब्दे दशमे तु मृतप्रजाः।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी॥

170. शङ्खलिखितौ अप्रियशीलां पुरुषद्वेषिणीमननुकूलां चाधिविन्देत।

---

163. व्य०नि०व०, p. 392.

164. धर्म०ल० (व्य०), p. 1025; स्मृ०च०दे० (II), p. 252.

165. च०चि०हे० (II.1), p. 847.

166. कृ०क०ल० (XII), p. 633; धर्म०ल०(व्य०) p. 1026 [2 अनन्तरं राजन्या वा]; वि०र०च०, p. 439 [as धर्म०ल०]; स्मृ०च०दे० (II), p. 253 [1 भतृरि (sic)].

167. कृ०क०ल० (XII), p. 6 33 [4 दर्शन-; 5 om. कुल-]; धर्म०ल० (व्य०), p. 1026: या०स्मृ०अ० I.84, p. 108 [2 विवृतासनो; 3 क्रीडगन्ध; 4 प्रसाधनानाम्]; वि०र०च०, p. 439; शू०क०क०, p. 63 [begins with प्रोषिते भर्तरि प्रेङ्खः 1 दर्शना वा नोद्यमानविकृतशयनोत्कृष्टपान; 3 om. धूप; om. from अस्वतन्त्राणां to स्त्रीणाम्]; स्मृ०च०दे० (II), p. 253 [4 दर्शन].

168. धर्म०ल०, p. 1024; स्मृ०च०दे० (II), p. 244.

169. गृ०र०च०, p. 84.

170. व्य०नि०व०, p. 396.



## [ पुनर्भूस्वैरिण्यादयः ]

171. शङ्खः तिस्रः पुनर्भ्वश्चतस्रः स्वैरिण्यः।

172. शङ्खलिखितौ तत्र पूर्वा पूर्वा जघन्या तासामपत्यानामृक्थ-पिण्डोदकयज्ञेषु यो विकल्पः स मातुरेव गुणवत्तया व्याख्यातः।

## [ वर्णजातिविवेकः तेषां वर्णानां कर्माणि ]

173. शङ्ख ब्राह्मणेन[1] क्षत्रिया[2]यामुत्पादितः[3] क्षत्रियः एव भवति।
क्षत्रियेण[4] वैश्यायामुत्पादितो[5] वैश्य एव भवति।[6]
वैश्येन शूद्रायामुत्पादितः[7] शूद्र एव भवति।[8]

174. शङ्खः मूर्धावसिक्तादीनां मातृजातीयत्वं वर्णत्वं च।

175. शङ्खः क्षत्रियवैश्या[1]नुलोमानन्तरोत्पन्नजो रथकारस्त[2]स्येज्या-दानोपनयनसंस्कारक्रिया अश्वप्रतिष्ठारथसूत्रवास्तु-विद्याध्ययनवृत्तिता च।

176. शङ्खलिखितौ पूर्वं धर्म एव क्षत्रियः। शस्त्रार्जनक्षत्राणव्यवहारदण्ड-रक्षणानुशासनमिति वृत्तयः। पूर्वं धर्म एव वैश्यः। कृषिः पशुपाल्यं वाणिज्यं योनिपोषणं वृद्धिप्रयोगः।

---

171. धर्म०ल०, p. 1026; या०स्मृ०वि०, I.67, p. 71.

172. धर्म०ल०, p. 1026.

173. कृ०क०ल० (XII), p. 814 [reads as तत्र ब्राह्मणात्क्षत्रियायां क्षत्रिय एवं जायते। क्षत्रियेण वैश्यायां वैश्य एव। वैश्येन शूद्रायां शूद्रः]; प०सं०मा० (V.I.11), p. 120 [1 and 2 transp.; 3 उत्पन्नः; 4 क्षत्रियाद्; 5 & 7 om. उत्पादितः]; या०स्मृ०अ०, I. 92, p. 118, [3 उत्पन्नः; 6 & 8 om. भवति; om. all उत्पादितः]; या०स्मृ०मि०, I. 91, p. 26; या०स्मृ०वी०मि०मि०मि०, I.91, p. 164 [as या०स्मृ०अ०]; स्मृ०मु०वै०, p. 70 [5 & 6 om. उत्पादितः; 7 शूद्रायां शूद्रः].

174. या०स्मृ०बा०, I.91, p. 282.

175. कृ०क०ल० (XII), p. 823 [1 लोमान्तरोत्पन्नो यो]; या०स्मृ०अ०, I. 9 & p. 119; या०स्मृ०मि०, I.95, p. 27 [1 लोमान्तरो]; या०स्मृ०वी०मि०मि०मि०, I.194, p. 167 [1 om. उत्पन्न; 2 adds च after तस्य]; स्मृ०मु०वै०, p. 71 [om. from क्षत्रिय upto उत्पन्नजो].

176. कृ०क०ल० (II), p. 252.

177. शङ्खलिखितौ चण्डालानामेकान्तवासः श्मशानसंरक्षणं श्वकुल[1]-परिधावनं वध्यघातित्वमिति[2] कर्माणि। श्वपचनानां चैवम्। दस्युम्लेच्छगणानां च कृतशस्त्रोपजीवनमिति[3] कर्माणि। नार्यः[4] सजातीयाः सर्वेषां श्रेयस्यः[5] स्युः।

178. शङ्खलिखितौ चाण्डाल्यवकीर्णी कन्यादूषी सगोत्रगाम्यबीजी।

179. शङ्खः चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम्।
एकैकं न्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम्॥

180. शङ्खलिखितौ त्रिषु वर्णेष्वसंस्कृतप्रसूतः[1] स्यात्कालाभिज्ञातः[2] पतितसावित्रीको ब्राह्मणः।

181. शङ्खलिखितौ क्षत्रियायामुग्रसङ्गे श्वपकः। वैदेहकायामम्बष्ठसंयोगे वेनः। शूद्रायां निषादेन पुल्कसः मागधेन कुक्कुटकः।

182. शङ्खलिखितौ सूतानामन्नसंस्कारक्रिया केशश्मश्रुनखलोमवापनस्नपनविलेपनान्यलङ्करणमश्वदमनयोग्यासनप्रेक्षणानि कर्माणि। क्षत्तुः प्रतीहारदौत्ये। मागधानां मृदङ्गवेणुवीणावादननृत्यगीतपुष्पमाणवककर्मसिद्धिकोपस्थानगाथाश्लोकप्रत्यूषप्रतिबोधनानि कर्माणि। अम्बष्ठानां जातिविशेषात्कायशल्यशलाकारसायनविषोन्मादनक्लीबज्वरापस्मारकुमारचिकित्साशरीरपोषणादि कर्माणि। वैदेहकानां पत्रच्छेदनसीवनरञ्जनावनिर्णेजनवापीतटाकोद्यानारामावस्करशोधनानि कर्माणि। उग्राणां कुञ्जरग्रहणराजच्छत्रधारणपुरतःप्रधावनबन्धनागरसंयमनानि कर्माणि। वेणानां लङ्घनवनक्रीडानियुद्धमायाशास्त्रेन्द्रजालप्रस्थापनप्रहरणानि कर्माणि। कुक्कुटानां प्रहरणकरणचक्रतोभरभिण्डिपालपाशासिपरश्वधलगुडलोहजालिका समरसंधारणादीनि कर्माणि। अयोगवानामवस्करणकुम्भकरणसुवर्णरजतमणिलोहादि शिल्पकरणानि चर्मवृत्तिता चेति। पुल्कसानां नगरवीथीरक्षणजागरणानाथमृतनिर्हरणालेख्यपत्रच्छेदमालिकत्वमिति कर्माणि। निषादानां वागुरापाशसंधारणमृगपशुपक्षिमत्स्यदारणमधुपातनविकर्तनादीनि कर्माणि।

177. कृ०क०ल० (XII), p. 833 [also 1 स्वकुलपरिघातनम्; 2 वध्यमारकत्वमिति; 3 कृषिशास्त्रोपजीवनमिति; 4 कार्याः; 5 श्रेयसं].

178. गो०ध०सू० (परि०) 2 अ० 4, p. 15.

179. शू०क०क०, p. 13.

180. कृ०क०ल० (XII), p. 827 [also 1 संस्कृत; 2 कलाभि & कलाभिजात].

181. कृ०क०ल० (XII), p. 819.

182. कृ०क०ल०, (XII), p. 830.



## [ आह्निकप्रकरणम् ]

### [ प्रबोधः ]

183. शङ्खः ब्राह्मे मुहूर्ते तूत्थाय मूत्रपुरीषोत्सर्गं कुर्यात्।

### [ मूत्रपुरीषोत्सर्गक्रिया ]

184. शङ्खः वाग्यतोऽवगुण्ठितशिरा भूमिमन्तर्धाय मेहेत्।

185. शङ्खलिखितौ नासंवृते मूत्रपुरीषे उत्सृजेत्। न सान्तर्वासा न निर्वासाः।

186. शङ्खः नानुदको नामृत्को[1] नापरिवेष्टितशिराः।

187. शङ्खलिखितौ अकस्मान्मूत्रं पुरीषं विसृजति पाणिना पाणिं पीडयति नखान्निकृन्तति हसति तूष्णीं ध्यायत्येवमादि दुष्टलक्षणं क्रुद्धस्य च स्वामिनोऽन्यत्र प्रकृतिशीलात्।

183. या०स्मृ०अ०, I. 48, p. 123.

184. या०स्मृ०वि०, I. 16, p. 36.

185. या०स्मृ०अ०, I. 134, p. 180; या०स्मृ०वी०मि०मि०मि०, I. 16, p. 34 [om from ना upto °जेत; Om. स from सान्तर्वासा]; वी०मि०मि०मि०, p. 37 [om. from ना upto °जेत्; om स from सान्तर्वासा; adds कुर्यात् at the end].

186. स्मृ०च०दे० (I), p. 90; स्मृ०मु०वै०, p. 212 [1 नामृतिका].

187. वि०तां०क०, p. 186.

188. शङ्खः मूत्रं पुरीषं नो कुर्यात् सोपानत्कः कथञ्चन।
उत्सृज्य मृज्जले कुर्यात्प्रस्त्रावे मेहनं द्विजः॥

189. शङ्खः न गोमयकृष्टोप्तशाद्वलचितिश्मशानवर्त्मखलपर्वत-
पुलिनेषु मेहेत्। भूताधारत्वात्।

190. शङ्खः न वृक्षदेवायतने न भस्मनि न गोव्रजे।
न मूत्रं पथि कुर्वीत न वल्मीके न शाद्वले॥
न फालकृष्टे न जले न चितौ न च पर्वते।
न समत्वेषु गर्तेषु न गच्छन्न च तिष्ठता॥
न छत्रमस्तकः कुर्यात्सोपानत्कः सपादुकः।
वार्यग्निविप्रमादित्यसमुखं गां सरस्वतीम्॥

191. शङ्खः मेहने[1] मृत्तिका सप्त लिङ्गे द्वे परिकीर्तिते।
एकस्मिन्विंशतिर्हस्ते द्वयोर्ज्ञेयाश्चतुर्दश॥[2]

192. शङ्खः रोमाणि प्रथमे पादे द्विपादे श्मश्रुवापनम्।
पादहीने शिखावर्जं सशिखं तु निपातने॥

193. शङ्खः षडन्या नखशुद्धौ तु देयाः शौचेप्सुना मृदः।

194. शङ्खः प्रदेया वामहस्तस्य पश्चाद्भागे तु षण्मृदः।

195. शङ्खदक्षौ तिस्रस्तु मृत्तिका देयाः[1] कृत्वा तु[2] नखशोधनम्।
तिस्रस्तु पादयोर्देया[3] शौचकामस्य[4] नित्यदा॥

---

188. वि०प्र०अन०, p. 152.
189. या०स्मृ०मि०, I.134, p. 39.
190. आ०प्र०क० fol. 5.
191. आ०म०नी०, p. 9; आ०र०ल०, p. 13; कृ०क०ल०, (I), p. 157 & p. 159 [both 2 देयाश् (for ज्ञेयाश्).]; गृ०र०च०, p. 146; म०पा०अन० (I), p. 46 [1 अपाने]; या०स्मृ०अ०, I.17, p. 36; वी०मि०मि०मि०, p. 53 [as कृ०क०]; & p. 58 [om. l.2]; शू०क०क०, p. 29; स्मृ०कौ०मद० fol. 110; स्मृ०च०दे० (I), p. 93; स्मृ०मु०वै०, p. 217 [1 दोष्णांश् (for ज्ञेयाश्).].
192. पं०सं०मा० (V.II-1), p. 264.
193. स्मृ०मु०वै०, p. 217.
194. स्मृ०र०वै०, p. 34.
195. आ०म०नी०, p. 9 [1 ज्ञेया; 4 नित्यशः]; आ०र०ल०, p. 15 [3 च (for तु);



196. शङ्खः एतच्छौचं[1] गृहस्थानां तथा गुरुनिवासिनाम्।
द्विगुणं स्याद्वनस्थानां यतीनां तु[2] चतुर्गुणम्॥

197. शङ्खः मृत्तिका तु समुद्दिष्टा त्रिपर्वी पूर्यते यथा।

## [ आचमनविधिः ]

198. शङ्खलिखितौ अङ्गुष्ठमूलस्योत्तरतः[1] प्रागग्रायां रेखायां ब्राह्मं[2] तीर्थं प्रदेशिन्यङ्गुष्ठयोरन्तरा पित्र्यं[3] कनिष्ठिकातलयोरन्तरा[4] प्राजापत्यम्।[5] पूर्वेणाङ्गुलिपर्वणि दैवम्।

199. शङ्खलिखितौ ब्रह्मतीर्थेनाचामेत्।

---

om. l.2]; आ०सा०गदा०, p. 36 [2 नखविशोधनम्]; कृ०क०ल० (I), p. 157 [4 नित्यशः]; गृ०र०च०, p. 146 [2 कर्तुं वै; 3 ज्ञेया (for देया); 4 सर्वदा]; वी०मि०मि०मि०, p. 53 [4 नित्यशः]; शू०क०क०, p. 29 [as म०पा०अन०]; शूद्रा०शेष, p. 86 [3 ज्ञेया]; स्मृ०च०दे० (I), p. 92-93; स्मृ०न०र०, p. 331 [2 नखविशोधनम्; शुद्धिकामेन नित्यशः (for post. half of *l*.2)]; स्मृ०मु०वै०, p. 217, [4 नित्यशः]; स्मृ०र०वैं०, p. 34, [om. *l*.2]. स्मृ०सा०वि०, p. 266 [om. l.1; 4 सर्वदा].
196. आ०म०नी०, p. 9 [2 त्रिगुणं भवेत्]; कृ०क०ल०, p. 157 [1 शौचमेतद्; 2 त्रिगुणं भवेत्]; गृ०र०च०, p. 146 [1 शौचमेतद् (by transp.) 2 as आ०म०]; म०पा०अन०, I. p. 46 [as कृ०क० with v.l.2 त्रिगुणं स्मृतम्]; शू०शि०शे०, p. 87 [subst. for l.1 गृहस्थस्य द्विगुणं ब्रह्मचारिणाम्; त्रिगुणं तु (for द्विगुणं स्याद्)]; स्मृ०च०दे० (I), p. 93 [also 2 त्रिगुणं भवेत्].
197. म०पा०अन० (I), p. 46; वी०मि०मि०मि०, p. 55; शु०कौ०गो०, p. 335; शु०वि०रु०, p. 47.
198. कृ०क०ल० (I), p. 53-54; प०सं०मा० (Vol.I-1), p. 235 [3 कनिष्ठातलयोरन्तरा]; म०स्मृ०मे० (II. 59, p. 101 [1 अङ्गुष्ठस्याधरतः प्रागग्रायाश्च; 3 कनिष्ठान्तरालयोः कायं पूर्वेणाग्रमङ्गुलीनां दैवकम्]; वी०मि०मि०मि० (परि०), p. 76 [4 °न्तरं]; & p. 78 [1 अङ्गुष्ठस्याधरतः रागग्रायाश्च लेखायां; 3 कनिष्ठातलयोरन्तरा कायं पूर्वेण पर्वणा अग्रमङ्गुलीनां दैवम्]; स्मृ०च०दे०, I., p. 96 [2 ब्राह्मतीर्थं प्रादे; 5 om. from पूर्वे upto दैवम्]; स्मृ०मु०वै०, p. 225 [1 [अ]न्तरतः (for [उ]न्तरतः).; 3 कनिष्ठातलयो °; 5 reads कराग्रैर्दैवतम्].
199. चतुर्वर्ग Vol. III. Part-I, p. 990.

200. शङ्खलिखितौ कमण्डलुमुपस्पृश्य प्रक्षाल्य पाणिपादौ चाच[1]म्येशानं मनसा ध्यायेत्।

201. शङ्खलिखितौ उद्धृत्य परिपूताभिरद्भिरवेक्षिताभिरक्षाराभिरनधिश्रिताभिरफेनाभिरबु[1]द्बुदाभिः। न शूद्राशुच्येकपाण्यावर्जिताभिः।

202. शङ्खः सुहृदयगाभिर्ब्राह्मणः शुचिः, कण्ठगाभिः क्षत्रियः, तालुगाभिर्वैश्यः स्त्रीशूद्रश्च ओष्ठप्रान्तमाभिः।

203. शङ्खः विप्रः शुध्यति हृद्गाभिः कण्ठगाभिस्तु भूमिपः। तालुगाभिस्तथा वैश्यः शूद्रः स्पृष्टाभिरन्ततः॥

204. शङ्खः अन्तर्जानु शुचौ देश उपविश्येन्द्रदिङ्मुखः। उदङ्मुखो वा प्रयतो दिशश्चानवलोकयन्॥

205. वृद्धशङ्खः तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम्।
[1]मध्यमाङ्गुष्ठयोगेन स्पृशेन्नेत्रद्वयं[2] ततः॥

---

200. आ०सा०गदा०, p. 38 [1 begins from आचम्ये °]; कृ०क०ल० (I), p. 159; गृ०र०च०, p. 148 [1 वाचमुत्सृज्य मनसा ईशानं ध्यायेत्]; या०स्मृ० I. 19 वी०मि०मि०मि०, p. 45 [as आ०सा०]; वी०मि०मि०मि० (आह्निक), p. 61.

201. आ०सा०गदा० (II), p. 43 [1 °क्षिताभिरबुद्बुदाभिः शूद्रा °; adds नाचामेत् at the end]. कृ०क०ल० (I), p. 133; गृ०र०च०, p. 159. [1 °द्भिर्वीक्षिताभिरनभिमिश्रिताभिरफेनाभिरबुद्बुदाभिर्न शूद्राशुद्येक °]; छ०गा०श्री०दत्त, p. 6 [om. upto न शूद्रा]; या०स्मृ०अ०, 1.18, p. 38 [उद्धृत्य परीक्षिताभिरहताभिरबुद्बुदाभिरशूद्राशुध्येक °; adds आचामेत् at the end]; या०स्मृ०बी०मि०मि०मि०, I. 19, p.41 [only न शूद्र ..... भिः]; या०स्मृ०वि०, I.20, p. 39 [reads only upto परिपूताभिः]; वी०मि०मि०मि० (आह्निक), p. 68 [reads upto बुद्बुदाभिः and reads the remaining portion on p. 67]; शू०कौ०, p. 341 [from न शूद्रा onwards].

202. या०स्मृ०वी०मि०मि०मि० I.21, p. 46.

203. As Quoted in शंखलिखितधर्मसूत्र, 94 by Dr. Kane.

204. वी०मि०मि०मि० (आह्निक), p. 80.

205. आ०र०ल०, p. 16-17 [transp. 1.2 & 1.3]; आचारेन्दु त्र्य०, p. 28 [subst. for 1.2-1.6 अङ्गुष्ठानामिकाभ्यां च चक्षुः श्रौत्रे पुनः पुनः। कनिष्ठङ्गुष्ठयोर्नाभि हृदयं च तलेन च। सर्वाभिस्तु ततः शीर्षं बाहु चाग्रेण संस्पृशेत्।]; कृ०क०ल० (I), p.



अङ्गुष्ठस्यानामिकया योगेन [3]श्रवणे स्पृशेत्।
कनिष्ठाङ्गुष्ठयोगेन स्पृशे[4]त्स्कन्धद्वयं ततः॥
नाभिं च हृदयं तद्वत् स्पृशेत्पाणितलेन तु।
संस्पृशेच्च तथा शीर्षमयमाचमने विधिः॥

206. वृद्धशङ्खः त्रिः प्राश्नीयाद्यदम्भस्तु प्रीतास्तेनास्य देवताः।
ब्रह्मा विष्णुश्च रुद्रश्च भवन्तीत्यनुशुश्रुम॥
गङ्गा च यमुना चैव प्रीयेते[1] परिमार्जनात्।
पादाभ्यां प्रीयते विष्णुर्ब्रह्मा शिरसि कीर्तितः॥
नासत्यदस्रौ प्रीयेते स्पृष्टे नासापुटद्वये।
स्पृष्टे लोचनयुग्मे तु प्रीयेते शशिभास्करौ॥
कर्णयुग्मे तथा स्पृष्टे प्रीयेते त्वनलानिलौ।[2]
स्कन्धयोः स्पर्शनादेवं प्रीयन्ते सर्वदेवताः[3]॥
नाभिस्पर्शेन देवेशाः प्रीयन्ते चास्य नित्यशः।

---

129 [अङ्गुष्ठमध्ययोगेन (by transp.); 1.3 reads as अङ्गुष्ठानामिकाभ्यां तु श्रवणे समुपस्पृशेत् and for 1.5 सर्वासामेव योगेन नाभिं च हृदयं तथा]; कृ०र०च० fol. 80 [transp. 1.4 & 1.5; om. 1.6]; गृ०र०च०, p. 154 [1 अङ्गुष्ठमध्य °; 1.3 अनामाङ्गुष्ठयोगेन; 4 कर्ण (for स्कन्ध-); om. 1.5 & 1.6]; प०सं०मा० (V.I.1), p. 238 [om. 1.3 & 1.4; 5 ततः]; म०पा०सद० (IX), p. 56 [om. अयमाचमने विधिः]; या०स्मृ०बा० I.22, p. 97 [3 श्रवणं; 5 तु ततः]; या०स्मृ०बी०मि०मि०मि०, p. 44 [reads only first line; अङ्गुष्ठमध्यमायोगात् (for the prior half of 1.1).]; वी०मि०मि०मि० (आह्निक), p. 83 [5 तु (for च); for 1.5 subst as कृ०क०]; शू०कौ०, p. 343 [om. 1.4-1.6]; शू०शि०शेष, p. 91 [om. 1.1; 5 तु ततः]; स्मृ०च०दे० (I), p. 98 [2 श्रवणं (for नेत्रद्वयं); 4 स्पृशेत् संधिद्वयं नरः (for the post half of 1.4).; 5 तु ततः]; स्मृ०मु०वै०, p. 226 [5 तु ततः].

206. कृ०क०ल० (I), p. 130-131 [om. 1.4; 3-पर्वताः नाभिः संस्पर्शन्नागाः (for the prior half of 1.9); 4 मूर्ध्नः]; प०सं०मा० (V.I.1), p. 250 [1.9 as कृ०क०]. वी०मि०मि०मि० (आह्निक), p. 88-89 [om 1.4.; 2 om तु; 1.9 as कृ०क० with variant. नाभेः; 4 मूर्ध्नः; om. 1.12]; स्मृ०च०हे०, I. p. 98 [5 संस्पर्शनात्तस्य].

संस्पृष्टे हृदये चास्य प्रीयन्ते सर्वदेवता:॥
मूर्ध्नि[4] संस्पर्शनादस्य[5] प्रीतस्तु पुरुषो भवेत्।
भूम्यम्बूत्सर्गतो गावो विश्रुद्धिश्च चराचरम्॥

207. शङ्खः ततोऽङ्गुलिचतुष्केण स्पृशेन्मूर्धानमादितः।
तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नेत्रद्वयं पृथक्॥
मध्यमानामिकाभ्यां तु स्पृशेन्नासापुटे क्रमात्।
अङ्गुष्ठेन कनीयस्याः कर्णौ संयोगतः स्पृशेत्॥
तर्जन्यङ्गुष्ठयोगेन नाभिं हृदि तलं न्यसेत्।[1]

208. शङ्खः अतः परं प्रवक्ष्यामि शुभामाचमनक्रियाम्।
कायं कनीनिका मूले तीर्थमुक्तं द्विजस्य तु॥
अङ्गुष्ठमूले च तथा प्राजापत्यं प्रकीर्तितम्।
अङ्गुल्यग्रे स्मृतं दिव्यं पित्र्यं तर्जनीमूलके॥
प्राजापत्येन तीर्थेन त्रिः प्राश्नीयाज्जलं द्विजः।[1]
द्विः प्रमृज्य मुखं पश्चात् खान्यद्भिः समुपस्पृशेत्॥

209. शङ्खलिखितौ त्रिः प्राश्य द्विः परिमृज्य शिरश्चक्षुः श्रोत्रं घ्राणं हृदयं चालभेत्।

210. शङ्खः सर्वासामेव योगेन नाभिं च हृदयं तथा।
संस्पृशेच्च तथा शीर्षमयमाचमने विधिः॥

211. विना यज्ञोपवीतेन तथा मुक्तशिखोऽपि वा।
अप्रक्षालितपादो वाप्याचान्तोऽप्यशुचिर्भवेत्॥

---

207. म०पा०अन० (I), p. 55 [1 स्पृशेत्]; वी०मि०मि०मि० (आह्निक), p. 83 [1 हृदितले]; स्मृ०च०दे० (I), p. 98; स्मृ०मु०वै०, p. 226 [l.1 अङ्गुलीनां चतुष्कोणं (for the prior half); om. l.5].
208. वी०मि०मि०मि० (आह्निक), p. 83; आ०र०ल०, p. 15 [reads only l.5; 1 शुचिः (for द्विजः).].
209. कृ०क०ल० (I), p. 130.
210. गृ०र०च०, p. 155.
211. शु०कौ०गो०, p. 340.



212. शङ्खः न तिष्ठन्न प्रणतो नाङ्गुलिभिर्न मुखशब्दं कुर्वन्नाधौतपादौ नायज्ञोपवीती न मुक्तशिखः (आचामेत्)।

213. शङ्खः कृत्वा मूत्रं पुरीषं च स्नात्वा भोक्तुमनास्तथा।
भुक्त्वा क्षुत्त्वा तथा सुप्त्वा पीत्वा चाम्भोवगाह्य च॥

214. शङ्खः रथ्यामाक्राय चाचामेद्वासो विपरिधाय च।

215. शङ्खः शुक्तवाक्याभिधाने पुनराचामेत्।

216. शङ्खः काशहस्तस्तु नाचामेत्कदाचिद्विधिशङ्कया।[1]
प्रायश्चित्तेन युज्येत[2] दूर्वाहस्तस्तथैव च॥

217. शङ्खः स्नाने भोजनकाले च सन्ध्ययोरुभयोरपि।
आचान्तः पुनराचामेत् जपदानार्चनेषु च॥

218. शङ्खः शूद्राहृतैस्तु नाचामेतेकपाण्याहृतैस्तथा।
न चैवाव्रतहस्तेन नापरिज्ञातहस्ततः॥

219. शङ्खलिखितौ मूत्रपुरीषष्ठीवनादिषु[1] शुक्तवाक्याभिधानेषु[2] पुनः[3] पुनरुपस्पृशेत्।

---

212. च०चि०हे० (III. I), p. 977.
213. कृ०क०ल० (I), p. 136; या०स्मृ०वा० I. 196, p. 462 [om. l.2]; वी०मि०मि०मि० (आह्निक), p. 106.
214. या०स्मृ०बा०, I. 196, p. 462.
215. या०स्मृ०बा०, I. 196, p. 459.
216. आ०म०नी०, p. 16 [1 वेदश °; om. l.2]; नि०सि०क०, p. 288; शू०शि०शे०, p. 93 [1 विधिसम्भवात्; 2 शुध्येत्]; श्रा०म०वी०, p. 15; स्मृ०मु०वै०, p. 234.
217. आ०म०नी०, p. 14 [reads स्नानभोजनकालेष्वाचान्तः पुनराचामेत्]; स्मृ०मु०वै०, p. 237.
218. या०स्मृ०बा०, I. 22, p. 80.
219. आ०सा०गदा०, (II), p. 50 [2 °भिधाने पुनरुपस्पृशेत्]; कृ०क०ल० (I), p. 41, [1 adds नि after पुरीष]; वी०मि०मि०मि० (आह्निक), p. 108 [3 च (for पुनः).].

220. शङ्खः अद्भिः समुद्धृताभिस्तु[1] हीनाभिः फेनबुद्बुदैः।
वह्निना[2] च न तप्ताभिर[3]क्षाराभिरुपस्पृशेत्॥

221. शङ्खः उभयत्र स्थितैर्दर्भैः समाचमति यो द्विजः।
सोमपानफलं तस्य भुक्त्वा यज्ञफलं लभेत्॥
ग्रन्थिर्यस्य पवित्रस्य न तेनाचमनं भवेत्।
आचामेद्यस्तु मोहाच्च यथा भोक्ता तथा तु सः॥

[ दन्तधावनम् ]

222. शङ्खः कुमाराणां च नारीणां कर्तव्यं चतुरङ्गुलम्।

223. शङ्खः दन्तवद्दन्तलग्नेषु रसवर्जनमन्यत्र[1] जिह्वाभिमर्शनात्।[2]

224. शङ्खः अलाभे दन्तकाष्ठानां प्रतिषिद्धे तथाहनि।

[ स्नानविधिः ]

225. शङ्खः प्रातः स्नानं नित्यस्नानम्।

226. शङ्खः प्रातः संक्षेपतः स्नानं शौचार्थं तु तदिष्यते।
मन्त्रैस्तु विधिनिष्पाद्यं मध्याह्ने तु सविस्तरम्॥

---

220. आचारेन्दु त्र्य०, p. 28, [2 न च]; प०सं०मा० (vol. I.1), p. 236 [2 न च]; वी०मि०मि०मि० (आह्निक), p. 66 [1 च (for तु). 2 चाप्यतप्ताभिः]; सं०र०गो०दी० (पूर्वार्ध) p. 221 [2 न च]; स्मृ०च०दे० I. p. 96 [3 रक्षताभि-]; स्मृ०मु०वै०, p. 222, [3 न क्षाराभि-].

221. म०पा०मद० (III), p. 239.

222. आ०र०ल०, p. 21.

223. आ०म०नी०, p. 14, [2 जिह्वास्पर्शनात्]; आ०र०ल०, p. 20; छ०गो०श्री०दत्त०, p. 8 [reads upto वर्ज्यम्]; प०सं०मा० (v.I.1), p. 243, [1 अन्यतो; 2 स्पर्शनात्]; या०स्मृ०अ० I. 195, p. 277; या०स्मृ०वी०मि०मि०मि० I. 195, p. 271; [reads only दन्तलग्नेषु रसवर्जम्]; वी०मि०मि०मि० (आह्निक), p. 111; स्मृ०च०दे०, (I) p. 101 [2 स्पर्शनान्]; स्मृ०मु०वै०, p. 238.

224. या०स्मृ०वी०मि०मि०मि० I.98, p. 180.

225. समयप्रदीप श्री दत्त fol. 23.

226. च०चि०हे० (v.III.1), p. 888.



227. शङ्खः स्नानं तु द्विविधं प्रोक्तं गौणमुख्यप्रभेदतः।[1]
तयोस्तु वारुणं मुख्यं तत्पुनः षड्विधं भवेत्॥
नित्यं नैमित्तिकं काम्यं क्रियाङ्गमलकर्षणम्।
क्रियास्नानं तथा[2] षष्ठं षोढा स्नानं प्रकीर्तितम्॥[3]
अस्नातस्तु[4] पुमान्नार्हो जप्याग्निहवनादिषु।[5]
प्रातः स्नानं तदर्थं[6] तु नित्यस्नानं[7] प्रकीर्तितम्॥
चण्डालशवयूपादि[8] स्पृष्ट्वा स्नानं[9] रजस्वलाम्।
स्नानार्हस्तु यदाप्नोति[10] स्नानं नैमित्तिकं[11] च तत्॥
पुष्यस्नानादिकं[12] यत्तु दैवज्ञविधिचोदितम्।[13]
तद्धि काम्यं समुद्दिष्टं नाकामस्तत्प्रयोजयेत्॥[14]
जप्तुकामः पवित्राणि[15] अर्चिष्यन्देवताः[16] पितॄन्॥
स्नानं समाचरेद्यस्तु[17] क्रियाङ्गं तत्प्रकीर्तितम्।[18]
मलापकर्षणं नाम[19] स्नानमभ्यङ्गपूर्वकम्॥
मलापकर्षणार्थं तु[20] प्रवृत्तिस्तस्य नान्यथा।[21]
सरःसु देवखातेषु तीर्थेषु[22] च नदीषु च।
क्रियास्नानं समुद्दिष्टं स्नानं तत्र मता क्रिया॥

---

227. आ०र०ल०, p. 55 [2 ततः स्नानं तत्र मता क्रिंया; 5 नित्याग्नि-9 स्नातां; 11 तु; 14 करोति वै; om., l.12]; आ०भू०त्र्य०, p. 150-151 [4 च; 5 जपाग्नि-; 1० यदास्नाति; 11 हि; 12 पुण्य-; 16 वार्चिष्यन्; 2० °कर्षणार्थाय; 23 मनाक्]; आचारेन्दु त्र्य० p. 40 [reads only l.1 to l.6] & p. 52 [reads l.9-10] & p. 53 [reads l.11-14; 20 °कर्षणार्था तु] & p. 54 [l.15-l.16] & p. 22) [reads only l.15]; & p. 233 [begins from l.7 upto l.14 with variants; 8 विति युपादि; 9 स्नातां; 1० °स्नाति; 11 हि; 16 °णार्चयिष्यन्; 22,तडागेषु सरस्सु च]; कु०क०ल० (III), p. 49 [om. l.1-2; 3 स्नानमिहोच्यते; 5 जप्यादिर्हं °; 7 उदाहृतम्; 8-शवयूपादि; 11 स्मृतम्; 13 नोदितम्; 15 पवित्रादि; 20 ° कर्षणार्था; ° 21 तत्र]; प०सं०मा० (v.I.1) p. 268-269 [om. l.3-l.4; 4 च; 8 यूपांश्च; 9 स्नातां; 10 °स्नाति; 11हि; 20 °णार्थाय]; म०पा०मद० (II), p. 236 [5 जप्यादि; 8 शवसूत्यादि; 9 स्नातां; 10 स्नाति; 11 हि; 13 नोद्गितम्; 14 तु; 20 °र्थात्तु]; या०स्मृ०अ० I.100, p. 127 [om. l.1-2; l.3-4 as म०पा०; 1० यतः स्नातिः 2० °र्थात्तु; 23 क्रिया मता

228. शङ्खः

यत्तु तीर्थादिषु स्नानं क्रियास्नानं प्रकीर्तितम्।
स्नानमेव फलं यत्तु क्रियास्नानं प्रकीर्तितम्॥

229. शङ्खः

तत्र काम्यं तु कर्तव्यं यथावद्विधिचोदितम्।[1]
नित्यं नैमित्तिकं नैव[2] क्रियाङ्गं मलकर्षणम्॥
तीर्थाभावे तु कर्तव्यं उष्णोदकपरोदकैः।
स्नातस्य[3] वह्नितप्तेन तथैव परिवारिणा॥
शरीरशुद्धिर्विज्ञेया न तु स्नानफलं लभेत्।[4]
अद्भिर्गात्राणि शुध्यन्ति तीर्थस्नानाद्भवेत्फलम्॥
सरःसु देवखातेषु तीर्थेषु च नदीषु च।
स्नानमेव क्रिया यस्मात्स्नानात्पुण्यफलं स्मृतम्॥

---

(by transp.).]; या०स्मृ०वी०मि० I.100. p. 186 [1 मुख्यगौण; 7 तदुच्यते; 8 शवपूयादि (sic.) 9-11 as म०पा०; 21 तत्र; 23 क्रिया मता (by tansp.).]; वी०मि०मि०मि० (आह्निक), p. 142. [1.5 & 1.6 only]; p. 139 [only 1.13-14; 20 °र्थात्तु]; p. 189 [om. 1.1-2; 6 तदर्थे; 8 शवयूयादि; 9–11 as म०पा०]; वी०मि०मि०मि० (तीर्थ), p. 66 [only 1.15-1.16]; स्मृ०च०दे० (I). p. [7 प्रकीर्त्यते; 12 पुष्टि; 17 °ह्यत्तु]; स्मृ०मु०वै०, p. 253-254 [8 शवधूपादि; 9 स्नातां; 1० स्नाति; 11 हि; 16 ह्यर्चिप्यन्; 2० °कर्षणार्थाय]; स्मृ०र०वे०, p. 45 [9 स्नातां; 10 स्नाति; 11 हि; 16 ह्यर्चिष्यन्; 18 तद्विदुर्बुधाः; 19 स्नानं; subst. 1.16 स्नानं तत्र समादिष्टं क्रियास्नानमिति स्मृतम्].

228. आचारेन्दु०त्र्य०, p. 54.

229. आ०सा०गदा० (II). p. 233 [5 स्नान; reads only 1.7 & 1.8]; p. 236 [reads only 1.2-3; 2 काम्यं]; कृ०क०ल० (III). p. 50. [1 नोदितम्; 3 स्नातव्यं]; कृ०क०ल० (X). p. 123 [reads only 1.4-5; वह्नितप्तेन शरीरशुद्धिर्विज्ञेया]; च०चि०हे० (परि०), p. 172 [only 1.4-5]; छ०गो०श्री०, p. 11, [only 1.4-5; 4 भवेत्]; प०सं०मा० (v.I.1), p. 286 [as छ०गो०]; या०स्मृ०वी०मि० I.100, p. 192 [om. 1.3 & 1.5 &1.6]; या०स्मृ०वी०मि० (v.I.1). p. 286 [as छ०गो०]; वि०पा०मद० (III). p. 192 [4 भवेत्]; वी०मि०मि०मि० (आह्निक), p. 189-190 [4 भवेत्]; p. 177 [only 1.2-3]; & p. 176 [as छ०गो०]; शू०वि०रु० p. 50 [reads 1.2-3]; स्मृ०च०दे० (I). p. 128 [reads only 1.4-5]; स्मृ०मु०ये० p. 258 [as छ०गो०].



230. शङ्खः

सर्वे प्रस्रवणाः पुण्याः सर्वे पुण्याः [1]शिलोच्चयाः।
नद्यः पुण्याः सदा सर्वाः जाह्नवी[2] तु विशेषतः॥
यस्य हस्तौ च पादौ च मनश्चैव[3] सुसंयतम्।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते॥

231. शङ्खः

प्रातःस्नानं प्रशंसन्ति भृष्टादृष्टकरं हि तत्।
सर्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम्॥
अलक्ष्मीः कालकर्णी च दुःस्वप्नान्दुर्विचिन्तितम्।
याम्यं हि पातनादुःखं नित्यस्नायी न पश्यति।
नित्यस्नानेन पूयन्ते अपि पापकृता नराः॥

232. शङ्खः

रथ्याकर्दमवर्षासु प्रविश्य ग्रामसङ्करम्।
जङ्घयोर्मृत्तिकास्तिस्रः पादयोर्द्विगुणास्ततः॥

233. शङ्खः

क्रियास्नानं प्रवक्ष्यामि[1] यथा[2]वद्विधिपूर्वकम्।
मृद्भिरद्भिश्च कर्तव्यं शौचमादौ यथाविधि॥
जले निमग्नस्तून्मज्य[3] उपस्पृश्य यथाविधि।
तीर्थस्यावाहनं[4] कुर्यात्तत्प्रवक्ष्याम्यतः परम्॥

---

230. आ०सा०गदा० (II). p. 233 [only सर्वे प्रस्रवणाः]; का०सा०गदा० (I). p. 483 [reads only 1.3-4]; कृ०क०ल० (III). p. 44-45 [1 शिलोच्चये; 24]; 4 कृ०क०ल० (VIII). p. 5 [reads only 1.3-4]; गृ०र०च०, p. 196; तीर्थचि० वाच०, p. 3 [reads only 1.3 & 1.4]. नि०प्र०नृ०, p. 530 [as का०सा०गरा०]; या०स्मृ०वी०मि०मि०मि०, I.100, p. 189 [om. 1.3-4]; वी०मि०मि०मि० (आह्निक), p. 183 [3 चापि (for चैव).]; & (तीर्थ), p. 14; स्मृ०त०र० (प्राय०) p. 491 [as का०सा०गदा०; 1.3-transp. हस्तौ and पादौ].

231. म०पा०मद० (I), p. 61-62.

232. म०पा०मद० (III), p. 257.

233. आ०भू०त्र्य०, p. 155-156 [3 मृज्य चोपस्पृश्य; 4 तीर्थम्; 6 याचितं; 7 सर्वाघविनिषूदनम्; 15 सर्वे रुद्रा तथाग्निश्च; 18 °न्त्वाशु मे; 2० सदाप्सुमाम्; 27 प्रवहती; 28 च समुदीरयेत्; 3० सूक्तं च]; कृ०क०ल० (I). p. 175-176 [reads from इत्येव 1.14; 22 तदा; 24 °वर्णोति च वै; 25 चतसृभिरन्; 27 प्रवहता तथा मन्त्रमुदीरयेत्; om. further]; कृ०क०ल० (III) p. 57-59 [1 तु

प्रपद्ये वरुणं देवमम्भसां पतिमूर्जितम्।[5]
याचेत[6] देही मे तीर्थं सर्वपापापनुत्तये॥
तीर्थमावाहयिष्यामि सर्वपापनिषूदनम्।[7]
सान्निध्यमस्मिन्स्वे[8] तोये स्थीयतां मदनुग्रहात्॥

---

(for प्र-); 2 यथावदनुपूर्वश:; 3 जलेऽभिमग्नस्; 6 याचितं; 7 सर्वाघविनिषूदनम्; 9 मजतां; 1० स्वयम्; 11 स्थित:; 17 त्वाप; 18 आशु; 19 पुनन्तु; 21 मम; 23 जले; 25 चतुसृभिस्; 27 तथा मन्त्रम्; after l.21 adds छन्द आनुष्टुभं तस्य ऋषिश्चैवाघमर्षण:। देवता भाववृत्तश्च पापघ्नस्य प्रकीर्तित: ll ]; गृ०र०च०, p. 206-207 [1 तु वक्ष्यामि यथावदनुपूर्वश:; 7 सर्वाघविनिसूदनम्; 8 तु तोये भजतां; 11 स्थित:; 14 स्थित:; 17 तु (for च); 18 °त्वाशु मे पापं पुनन्तु च सदा मम; 23 जले; 24 °र्णेति च वै; 27 प्रवहती; 28 च समुदीरयेत्; 31 तथा; subst. for l.22 छन्दश्चानुष्टुभस्तस्य ऋषिश्चैवाघमर्षण:, om. l.23]; & p. 231 [reads from इत्येव मुक्त्वा; 23 जलै:; also reads l.15, l.16 on p. 230; 24 °र्णेति च वै; 26 देवीति च; 27 प्रवहतां तथा मन्यमुदीरयेत्; om. further]; नि०प०, p. 81 [only l.2]; & p. 88, [only l.3]; & p. 10 [reads from l.9 to l.14; 11 स्थित:; 17 त्वाप; 18 आशु (for तु); पुनन्तु च सदा मम]; नि०प्र०नृ०, p. 595 [l.1 to l.8 only 2 °वदनुपूर्वश:; 6 याचित]; प०सं०मा० v.I.1), p. 284 [3 चोपस्पृश्य; 6 याचितं; 8 तो ये च क्रियताम्]; p. 274-275 [om. l.1-4; 5 प्रतिमिश्चरम्; 6 याचित; 7 सर्वावौघनि; °8 तोये च क्रियतां; om. l.10-l.11; 14 वरुणं; om. l.13; 18 त्वाशु मे; 2० सदैव माम्; om. from l.15 onwards]; म०पा०मद० (III) p. 270 [6 याचितं; om. l.7; 8 तोये तु; 11 स्थित:; 12 त्वनिसदनम्; 28 च समु °]; वी०मि०मि०मि० (आह्निक), p. 236-237 [1 तु न °; 2 यथावदनुपूर्वश:; 3 om. तु; 6 याचितं) सर्वाघविनिषूदनम्; 8 तोये तु; 9 भजतां; 11 स्थित:; 14 वरुणं; 17 त्वाप; 18 त्वाशु मे; 19 पुनन्तु; 21 मम; 23 जलै:; 24 वर्णेति च वै; 25 चतसृभिस:; 27 तथा 28 मन्त्रमु °; 29 सदैवतम्; after l.21 adds as कृ०क०, p. 57; for l.23 subst. यथाश्वमेध: क्रतुराट् सर्वपापापनादिन:]; स्मृ०च०दे० (I), p. 127 [6 याचित; 15 सर्वे रुद्रास्तथाग्निश्च; 18 °त्वांशु मे पापं; 2० आसु माम्; 27 प्रवहती; 28 च समु °; 3० सूक्तं च; 32 मूर्ध्नि च तथा]; & again on p. 127 [reads from l.15: 23 जलै:; 27 प्रवहती; 28 च समु° स्मृ०मु०वै०, p. 286 [after l.1 reads last st. of स्नान; 3 om. तु; 6 या चित्तं; 7 सर्वाद्यविनि°; 10 सर्वश्च; 18 आशु मे पापं; 20 सदैव माम्; 28 च समुदी °]; & p. 260 [reads from l.5; 5 पतिभिश्चरम्; 7 सर्वाघविनि °; 8 चित्तो ये



रुद्रान्प्रपद्ये वरदान्सर्वानप्सुषदस्त्वहम्।[10]
सर्वानप्सुषदश्चैव प्रपद्ये प्रणतस्त्विह॥[11]
देवमप्सुषदं वह्निं प्रपद्येऽघनिषूदनम्।[12]
आप:[13] पुण्या: पवित्राश्च प्रपद्ये शरणं तथा॥[14]
रुद्राश्चाग्निश्च[15] सर्पाश्च[16] वरुणाश्चाप[17] एव च।
शमयन्त्वशुभं[18] पापं रक्षन्तु[19] च सदा[20] शुभम्॥[21]
इत्येवमुक्त्वा कर्तव्यं तत:[22] संमार्जनं कुशै:[23]।
आपोहिष्ठेति तिसृभि: यथावदनुपूर्वश:॥
हिरण्यवर्णा[24] इति च ऋग्भिश्च[25] तिसृभिस्तथा।
शं नो देवीरिति[26] तथा शं न आपस्तथैव च॥
इदमाप: प्रवहतेत्येवं[27] सर्वमुदीरयन्।[28]
एवं संमार्जनं कृत्वा छन्द आर्षं[29] च दैवतम्॥
अघमर्षणसूक्तस्य[30] संस्मरेत्प्रयत:[31] सदा।
अतोऽम्भसि निमग्नस्तु त्रि: पठेदघमर्षणम्॥
प्रदद्यान्मूर्[32]धनि तथा महाव्याहृतिभिर्जलम्।

234. शङ्खः
'आपो अस्मान्' इति स्मृत्वा भास्कराभिमुख: स्थित:।
'इदं विष्णु'र्जपित्वा तु प्रतिस्नातो निमज्जति॥
अप्रवाहोदकस्नानं विप्रपादाभिषेचनम्।
आदित्याभिमुख: कुर्यात्सन्ध्यावन्दनमेव च॥

235. शङ्खः
भोगाय क्रियते यत्तु स्नानं यादृच्छिकं नरै:।
तन्निषिद्धं दशम्यादौ नित्यं नैमित्तिकं न तु॥

236. शङ्खः
सर्वतीर्थाभिषेकश्च ऊर्ध्वं संमार्जनाद्भवेत्।
अघमर्षणसूक्तेन मार्जनं कारयेत्तत:॥
शन्न·आपश्च द्रुपदां कामतस्तु प्रयोजयेत्।
ॐकारपूर्वां गायत्रीं अब्लिङ्गामघमर्षणम्॥

---

क्रियतां; 1० तथा (for स्त्वहम्); om. l.10-11; 13 आप: ; 14 वरुणं; om. l.13; 18 त्वाशु मे; 2० सदैव माम्; om. from l.15 onwards].

234. आ०म०नी०, p. 26.

235. आ०सा०गदा०, (II), p. 233.

236. गृ०र०च०, p. 230.

237. शङ्खः यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः।
तथाघमर्षणं सूक्तं सर्वपापापनोदनम्॥
देवता भाववृत्तश्च पापघ्नश्च प्रकीर्तितः।
ततोऽम्भसि निमज्जे तु त्रिः पठेदघमर्षणम्॥

238. शङ्खः अनेन विधिना स्नात्वा[1] अमेध्यस्नानवाससम्।
परिवर्तितवासाश्च[3] तीर्थतीरमुपस्पृशेत्॥

239. शङ्खः उदकस्याप्रदाना हि स्नानशाटीं न पीडयेत्।
अनेन विधिना स्नातः पुण्यं फलमुपाश्नुते॥

240. शङ्खः सर्वतीर्थानि[1] पुण्यानि पापघ्नानि सदा[2] नृणाम्।
परस्परानपेक्षाणि[3] कथितानि मनीषिभिः॥

241. शङ्खः तीर्थं प्राप्यानुषङ्गेण[1] स्नानं तीर्थे[2] समाचरन्।
स्नानजं फलमाप्नोति तीर्थयात्राफलं[3] न तु।

---

237. कृ०क०ल० (III), p. 57 [reads l.4 before l.1; om. l.3]; गृ०र०च०, p. 208; वी०मि०मि०मि० (आह्निक), p. 236-237 [as कृ०क०].

238. आ०सा०गदा० p. 70 [1 स्नात; 3 चेत् (for च)]; कृ०क०ल० (III), p. 57 59 [2 अब्मध्ये: 3 चेत्]; गृ०र०च०, p. 208; वी०मि०मि०मि० (आह्निम), p. 236-237 [as कृ०क०].

239. आ०सा०गदा०, p. 72 [1 उदकस्य प्रदानार्थं; om. l.2]; कृ०क०ल० (III), p. 208 & p. 268 [om. l.2]; वी०मि०मि०मि० (आह्निक), p. 236-237 & p. 243.

240. कृ०क०ल० (III), p. 44 [3 also प्रेक्ष्याणि] गृ०र०च०, p. 196; या०स्मृ०वी०मि० I. 100, p. 189 [2 तथा]; वि०पा०मद० (III), p. 723; वी०मि०मि०मि० (आह्निक), p. 182-183 & (तीर्थ) p. 13 [1 तीर्थान्येव तु सर्वाणि]; & p. 23 [1 as in p. 13] & p. 67 [only of as सर्वाण्येव तु तीर्थानि पापघ्नानि सदा नृणाम्].

241. का०सा०गदा० (I), p. 482 [1 प्रसङ्गेन; 2 तीर्थं; 3० °श्रितं]; कृ०क०ल० (VIII), p. 11; तीर्थ चि० वाच०, p. 10; नि०प्र०नृ०, p. 529; नि०सि०क०, p. 359 [2 °कृतं]; वि०पा०अन० (II), p. 766; वी०मि०मि०मि० (तीर्थ), p. 16 & p. 35; स्मृ०च०दे०, p. 132 [2 यस्तत्र स्नानमाचरेत्; 3 °श्रितं]; स्मृ०त०र० (प्राय०), p. 491.



242. शङ्खः नृणां पापकृतां तीर्थे भवेत्पापस्य[1] संक्षयः।
यथोक्तफलदं तीर्थं भवेच्छ्रद्धात्मना[2] नृणाम्॥

243. शङ्खः [1]मार्गान्तरा नदी प्राप्तौ स्नानादि परपारतः।[2]
[3]अर्वाक्तीरे सरस्वत्या एष मार्गगतो विधिः॥
प्रवाहाभिमुखो मज्जेत् यत्रापः प्रवहन्ति वै।
स्थावरेषु च सर्वेषु आदित्याभिमुखस्तथा॥

244. शङ्खः वारुणं चावगाह्यम्।

245. शङ्खः प्रतिग्रहादुपावृत्तः सन्तुष्टो येन केनचित्।
अहङ्कारविमुक्तश्च स तीर्थफलमश्नुते॥
अकल्को निरारम्भो लघ्वाहारी जितेन्द्रियः।
विमुक्तो दुष्टसंसर्गो स तीर्थफलमश्नुते॥

246. शङ्खलिखितौ आचारवतां धर्मो ह्यावश्यक इत्याचार ऋषीणां स्थितिः देवतानां चरित्रं मनुष्याणाम्।

247. शङ्खः अनश्नन्ननग्नः स्नायात्। नाप्सु मेहेत्।[1] नोद्धर्षणं कुर्यात्। न पादेन पाणिना वा जलमभिहन्यात्।[2]

---

242. का०सा०यदा० (I) p. 485 [2 शान्तात्मनां]; कृ०क०ल० (I), p. 45 [1 पापस्य शमनं भवेत्]; कृ०क०ल० (VIII), p. 11; गृ०र०च०, p. 196 [1 पापस्य शमनं भवेत्; 2 शुद्धात्मना]; नि०प्र०नृ०, p. 537 [1 as गृ०र०; 2 शुद्धात्मना ततः]; या०स्मृ०वी०मि०मि० I. 100, p. 189 [as गृ०र०]; वी०मि०मि०मि० (आह्निक), p. 183 [1 तीर्थं पापस्य शमनं भवेत्]; (तीर्थ), p. 13 [as गृ०र०]; स्मृ०च०दे० (I), p. 132. [1 पापप्रशमनं भवेत्; 2 शुद्धात्मनां]; स्मृ०त०र० (आह्निक), p. 367 [2 शुद्धात्मनां]; & (प्राय), p. 491 [2 शुद्धात्मनां].

243. वि०पा०अन० (III), p. 766; वी०मि०मि०मि० (तीर्थ), p. 67 [om. l.3-4; 1 मार्गेऽन्तरा; 2 परपारनः; 3 एव].

244. या०स्मृ०वी०मि० I. 100, p. 186.

245. वि०पा०अन० (III), p. 745.

246. कृ०क०ल०, (I), p. 179.

247. आ०र०ल०, p. 26. [अनश्नन् स्नायात्; om. further]; आ०सा०गदा० (II), p. 71 [1 मेहनोद्धर्षणं; 2 उदकम्; 3 om. from यस्मा upto देवताः; 4 ° क्रमेद्; 5 अल्पोदकेन]; कृ०क०ल० (III), p. 38; छ०गां० श्रीदत्त, p. 13

यस्मादापो[3] वै सर्वा देवताः। न स्रवन्तीं वृथाति[4]-
क्रामेदनवसिच्य।[5] अमेध्योदकं परिहरेत्। नाल्पोदके
स्नायात्। न समुद्रोदकमवगाहेत्।

### [ मार्जनम् ]

248. शङ्खः आचम्यैवं पुरा प्रोक्ता[1] तीर्थं संमार्जने शुभे।
मन्त्रास्तैर्मन्त्रितं[2] तोयं मूर्ध्नि भूयो तथा क्षिपेत्॥
क्षिप्तेन मूर्ध्नि तोयेन पापमस्य प्रणश्यति।
भूमौ क्षिप्तेन हन्यन्ते असुरा[4] एव शत्रवः॥

### [ प्राणायामलक्षणम् ]

249. शङ्खः व्याहृतीः कीर्तयेच्चैव तथैवाव्ययमक्षरम्।

250. शङ्खः उपस्पृशेत्ततः पश्चान्मन्त्रेणानेन[1] धर्मतः।[2]
अन्तश्चरसि[3] भूतेषु गुहायां विश्वतोमुखः।
त्वं यशस्त्वं वषट्कारः आपो ज्योती रसोऽमृतम्॥

---

[reads नाप्सु to कुर्यात्]; & p. 10 [reads न समुद्रोदकमवगाहेत; om. the remaining portion]; या०स्मृ०वी०मि०मि०मि० I. 100 p. 191 [reads from अमेध्योदकं; 5 अल्पोदकेन]; वी०मि०मि०मि० (आह्निक), p. 167 [6 om. उदक]; स्मृ०च०दे० (I), p. 129 [only नाल्पोदके to अवगाहेत]; स्मृ०मु०वै०, p. 256 [reads नाल्पोदके निमज्जेन्न समु °].

248. कृ०क०ल० (I), p. 175-176 [4 देव]; कृ०क०ल० (III), p. 86 [4 देव]; गृ०र०च०, p. 231. [4 त्वचिरादेव]; ब्रा०स०हला० fol. 11 [1 प्रोक्ष्य; 2 मन्त्रितैः तोयैः]; वी०मि०मि०मि० (आह्निक), p. 283.

249. कृ०क०ल० (I), p. 176 & कृ०क०ल० (III), p. 87; गृ०र०च०, p. 231; नि०प्र०नृ०, p. 177 [reads व्याहृतेः कीर्तयेदेवं तथैवाक्षरमव्ययम्]; वी०मि०मि०मि० (आह्निक), p. 283.

250. आ०र०ल०, p. 41 [2 मन्त्रवित्]; आ०सा०गदा० (II), p. 121 [2 धर्मवित्; 3 चरति]; कृ०क०ल० (I), p. 176; कृ०क०ल० (III), p. 87 [1 also पश्चादित्याभिमुखो जलम्]; गृ०र०च०, p. 233; नि०प०वाज०, p. 182 [reads only l.1 & 2 मन्त्रवित्]; या०स्मृ०वी०मि०मि०मि० I. 21, p. 58 [om. l.2-3]; वी०मि०मि०मि० I.21, p. 58. [om. l.2-3]; वी०मि०मि०मि० (आह्निक), p. 283 [श्मा ].



251. शङ्खः सातत्यब्रह्म चैतद्वै पुरा दृष्टं स्वयम्भुवा।
एवं संमार्जनं कृत्वा बाह्यशुद्ध्यर्थकारणात्।
तथाभ्यन्तरशुद्ध्यर्थं प्राणायामं समाचरेत्॥

252. शङ्खः दक्षिणे रेचकं कुर्याद्वामेनापूर्य चोदरम्।
कुम्भकेन जपं कुर्यात्प्राणायामस्य लक्षणम्॥
सप्तव्याहृतयः प्रोक्ताः प्राणायामे तु नित्यशः।
भूर्भुवः स्वर्महर्जनस्तपः सत्यं तथैव च॥
प्रत्योङ्कारसमायुक्तं तथा तत्सवितुः परम्।
ओमापो ज्योतिरित्येतच्छिरः पश्चात्प्रयोजयेत्॥
त्रिरावर्तनयोगात्तु प्राणायामस्तु शब्दितः।

253. शङ्खः बृहस्पतिवसिष्ठाङ्गिरसपैठीनसिबौधायनाः
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।
त्रिः पठेदायतप्राणः[1] प्राणायामः स उच्यते॥

### [ प्राणायामान्ते मार्जनम् ]

254. शङ्खः त्रिरावर्त्य तु सावित्रीं प्रणवं व्याहृतीस्तथा।
मार्जनं च तथा कृत्वा आपो हि ष्ठेति मार्जयेत्॥
सार्धामृचञ्च प्रक्षिप्य ऊर्ध्वं सार्धा समुत्क्षिपेत्।
अधो भागविशिष्टायामसुरा यान्ति संक्षयम्॥

---

251. गृ०र०च०, p. 231.

252. वि०पा०अन० (III), p. 174-175; वी०मि०मि०मि० (आह्निक) p. 307 [om. l.3-7].

253. कृ०क०ल० (I), p. 181; गृ०र०च०, p. 237; ब्रा०स०हला० fol. 17 & fol. 22 & fol. 26 [reads l.2 as ये जपन्ति सदा तेषां न भयं विद्यते क्वचित्]; या० स्मृ० वी०मि०मि०मि०, I.22, p. 67 [1 जपेत्].

254. गृ०र०च०, p. 230.

### [ अर्घ्यप्रदानम् ]

255. शङ्खः आचम्य च[1] ततः पश्चादादित्याभिमुखो जलम्।<br>
उदुत्यं [2]जातवेदेति मन्त्रेणानेन च क्षिपेत्॥

### [ जपविधिः ]

256. शङ्खः एष एव विधिः प्रोक्तः सन्ध्ययोश्च द्विजातिषु।<br>
पूर्वां सन्ध्यां जपेत्तिष्ठन्नासीनः पश्चिमां तथा॥<br>
तस्यां मध्यमसन्ध्यायां सावित्रीं द्विजसत्तम।<br>
युवतीं शुक्लवर्णां च चारुरूपां चतुर्भुजाम्॥<br>
शुक्लवासद्वयोपेतां तार्क्षस्कन्धगतां शुभाम्।<br>
शङ्खचक्रगदापद्मधारिणीं विष्णुदैवताम्॥<br>
विष्णुलोकनिवासां तामायान्तीं सूर्यमण्डलात्।<br>
रक्ता भवति गायत्री सावित्री शुक्लवर्णिका॥

257. शङ्खः ततो जपेत्पवित्राणि पवित्रं वा स्वशक्तितः।<br>
ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुवन्॥[1]

258. शङ्खः शान्तिकामस्तु जुहुयात्[1] गायत्रीमक्षतैः शुचिः।

259. शङ्खः स व्रती बहिः सन्ध्यामुपासीत्।

---

255. कृ०क०ल० (I), p. 176 & (III), p. 187 [1 तु; 2 जातवेदसमिति मन्त्रेण निक्षिपेत्]; वी०मि०मि०मि० (आह्निक) p. 283 [1 तु].

256. स्मृ०च०दे० (I) p. 151, [reads only l.2]; नि०प्र०नृ०, p. 599-600 [om. l.2].

257. कृ०क०ल० (I), p. 176; कृ०क०ल० (III), p. 87 [1 अवाप्नुयुः (also)]; वी०मि०मि०मि० (आह्निक) p. 283 [1 अवाप्नुवन्] & p. 311 [reads only l.2].

258. कृ०क०ल० (III), p. 354 [1 जुहुयाद् गायत्र्या चाक्षते शुचिः]; कृ०र०च०, p. 544; गृ०र०च०, p. 409; च०चि०हे० (परि०), p. 682 [1 as कृ०क०]; नि०प्र०नृ० p. 82 [सावित्री चा (also म) क्षतैः].

259. कृ०क०ल० (I), p. 164; या०स्मृ०बा०, I.24-25, p. 93; या०स्मृ०वी०मि०मि०मि० I.22, p. 52; वी०मि०मि०मि० (आह्निक), p. 260.



260. शङ्खलिखितौ पूर्वां सन्ध्यां जपंस्तिष्ठेत्स्वे काले वापरां चिरम्।<br>
ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः॥

261. शङ्खः प्रातः सन्ध्यां सनक्षत्रां मध्यमां स्नानकर्मणि।<br>
सादित्यां पश्चिमां सन्ध्यामुपासीत यथाविधि॥<br>
आपो हि ष्ठेति संप्रोक्ष्य तृचेनाब्दैवतेन तु।<br>
आपः पुनन्तु मन्त्रेण पीत्वापो मार्जयेत्पुनः॥<br>
दधिक्राव्ण इति च आपो हि ष्ठादिभिस्तथा।<br>
प्रदक्षिणं परिषिच्य त्वारभेच्छ्रुतिचोदितम्॥<br>
अर्घ्यमेकं प्रदातव्यं मध्याह्ने भास्करं प्रति।<br>
पाणिना जलमादाय सकृत्कुर्यात्प्रदक्षिणम्॥<br>
दर्भान्धारयमाणः सन्नात्मनो ध्यानमाचरेत्।<br>
आदित्यादीन् ग्रहांस्तत्र तर्पयेत्सुसमाहितः॥<br>
अथ मध्यमसन्ध्यायामासीनः प्राङ्मुखां जपेत्।<br>
स्थितो जपेत्सदाकालमादित्याभिमुखो द्विजः॥<br>
यदि स्यात्क्लिन्नवासा वै वारिमध्यस्थितो जपेत्।<br>
सहस्रपरमां देवीं शतमध्यां दशावराम्॥<br>
गायत्रीं तु यथाशक्ति जपेदव्यग्रमानसः।<br>
स्वशाखाविहितैर्मन्त्रैरादित्यमुपतिष्ठते॥<br>
प्रदर्शन्योगमुद्रामासत्येनेति मन्त्रकम्।<br>
स्थितो जपेदूर्ध्वबाहुः सूर्यं पश्यन्समाहितः॥

262. शङ्खः तत्र जप्तं हुतं दत्तं सर्वं कोटिगुणं भवेत्।

---

260. कृ०क०ल० (I), p. 179.

261. आ०क०प्र०अ०, p. 170 [reads l.1-2]; आ०प्र०क० fol. 63 [reads only l.1-2]; आ०म०बी०, p. 50 [as आ०क०प्र]; आ०र०ल०, p. 37 [reads only l.2]; प०सं०गा० (vol.1.1) p. 29 [as आ०क०प्र०]; या०स्मृ०बा० I.24-25, p. 95 [reads only l.1]; स्मृ०च०दे० (I), p. 185 [as आ०क०] स्मृ०मु०वै०, p. 310, [as आ०क०प्र०]; & p. 375; स्मृ०र०व०, p. 157 [as आ०क०प्र०].

262. स०म०नी०, p. 68.

263. शङ्खः स्वरवर्णपदैर्वाक्यं[1] शुद्धमावर्तयेज्जपन्।[2]
न कम्पयेच्छिरो ग्रीवा दन्तान्नैव प्रदर्शयेत्॥[3]

264. शङ्खः गृहे त्वेकगुणं जप्यं नद्यादौ[1] द्विगुणं स्मृतम्।
गवां गोष्ठे दशगुणमग्न्यगारे[2] शताधिकम्॥
सिद्धक्षेत्रेषु[3] तीर्थेषु देवतायाश्च[4] सन्निधौ।
सहस्रशतकोटीनामनन्तं विष्णुसन्निधौ॥

## [ सन्ध्या ]

265. शङ्खः सूर्यायैव तु गायत्र्या त्रिसन्ध्यास्वञ्जलिं क्षिपेत्।
प्रातर्मध्याह्नयोस्तिष्ठन्सायमासीन एव वा॥
मन्देहानां वधार्थाय प्रक्षिपेदुदकाञ्जलिम्।
प्रायश्चित्तार्थमाचम्य मुच्यते दैत्यहत्यया॥
प्रणवव्याहृतिभिश्च कृत्वात्मानं प्रदक्षिणम्।
आचम्यैव च ततस्तिष्ठन्ध्यायेत्सन्ध्यां समाहितः॥

266. शङ्खः सायमग्निश्च मेत्युक्त्वा प्रातः सूर्यश्च मेति च।
आपः पुनन्तु मध्याह्ने उपस्पृश्य यथाविधि॥

## [ सन्ध्यालोपे प्रायश्चित्तम् ]

267. शङ्खः सन्ध्यादि नित्यलोपे तु दिनमेकमभोजनम्।
दिनद्वये त्रिरात्रं स्यात्कृच्छ्रार्थं तु दिनत्रये॥
ततोऽप्येवं प्रकल्प्य स्याद्व्यासस्य वचनं तथा॥

---

263. स्मृ०च०दे० (I), p. 149; स्मृ०मु०वै०, p. 358 [2 वर्तयन् जपेत्; 3 प्रघट्टयेत्]; स्मृ०र०वे०, p. 94 [1 सर्ववर्ण-; 2 वर्तयन् जपेत्; 3 प्रकाशयेत् also प्रवेदयेत्].

264. आचारेन्दु त्र्य०, p. 79 [1 नद्यां तु; 4 °तानां च]; प०सं०मा० (v.I.1), p. 307 [2 [आ] गारे]; सं०र०गो०दी०, p. 235 [1 नद्यां तु; 3 transp. क्षेत्रेषु and तीर्थेषु]; & p. 739 [1 & 3 as सं०र०]; स्मृ०च०दे० (I), p. 150 [4 °तानां च].

265. स्मृ०मु०वै०, p. 319.

266. नि०प०वाज०, p. 182.

267. स्मृ०मु०वै०, p. 315; स्मृ०र०वें०, p. 101 [om. 1.3].



## [ सर्ववेदपवित्राणि ]

268. वसिष्ठशङ्खलिखिताः
सर्ववेदपवित्राणि वक्ष्याम्यहमतः परम्।
येषां जपैश्च होमैश्च पूयन्ते नात्र संशयः॥
अघमर्षणं देवकृतं शुद्धवत्यस्तरत्समाः।
कुष्माण्ड्यः पावमान्योऽथ[1] दुर्गासावित्र्यथैव च॥
अभिषङ्गाः पदस्तोमाः सामानि व्याहृतीस्तथा।
भारुण्डानि च सामानि गायत्रं दैवतं तथा॥
पुरुषव्रतं च भासं च तथा देवव्रतानि च।
अब्लिङ्गा बार्हस्पत्यं च वाक्सूक्तं मध्वृचस्तथा॥
शतरुद्रियमथर्वाशिरस्त्रिसुपर्णं महाव्रतम्।
गोसूक्तं चाश्वसूक्तं च इन्द्रशुद्धे च सामनी॥
त्रीण्याज्यदोहानि रथन्तरं च
अग्निव्रतं वामदेव्यं बृहच्च।
एतानि गीतानि पुनन्ति जन्तून्
जातिस्मरत्वं लभते य इच्छेत्॥

269. शङ्खः इति वेदपवित्राण्यभिहितानि।[1] एतेभ्यः सावित्री विशिष्यते। नाघमर्षणात्परम[2]न्तर्जले।[3] न व्याहृतिभ्यः परं होमे। न सावित्र्याः[4] परं जप्ये। कुशवृस्यामासीनः[5]

---

268. कृ०क०ल० (III), p. 91; वी०मि०मि०मि० (आह्निक), p. 319 [1 च].

269. आचारेन्दु त्र्य० p. 80 [reads from कुशबृस्यां to जपं कुर्यात्; 5 कुशचर्मसमासीनः; 8 om. उदङ्मुखः; 9 om. वा to य]; आ०र०ल०, p. 45 [reads only कुशोत्तरीयां वा कुशपवित्रपाणिः सूर्याभिमुखो देवतां ध्यायं जपं कुर्यात् & 1.22]; आ०सा०गदा० (II), p. 207-209 [1 इति पवित्राण्यभिहितानि; 2 मर्षणादित्यादि च ॐकारस्य; 15 शिरः; 18 सा देवी; 19 जाप्येन सर्वपातकनाशिनी; om. 1.6; 23° ती स० om. 1.13-14; 25 त्राणप्रदां; 27 जप्य; om.1. 19-22; 31 माप्नोत्यनुत्तमम्; om. 1.25-26.]; & p. 279 [reads only नाद्यमर्षजात् to परं जप्ये; 3 जलजपो न]; कृ०क०ल० (I), p. 181 [reads from आदौ देवता to शीर्षम्; 14 om. महा०]; & (III), p. 101-103; गृ०र०च०, p. 242 [reads only कुशबृस्यां to जपं कुर्यात्; 6 कुशोत्तरीयवान्]; & p. 239 [reads only

कुशोत्तरायां[6] वा कुश[7] पवित्रपाणिरुदङ्मुखः[8] सूर्याभिमुखो वाऽक्षमालामादाय[9] दैवतां ध्यायन् जपं[10] कुर्यात्। सुवर्णमणिमुक्ताफल[11] स्फटिकपद्माक्षेन्द्राक्षपुत्रजीवकानामान्यतमादक्षमालां[12] कुर्यात्। कुशग्रन्थिकृतां[13] वा हस्तोपयामैर्वा गणयेत्। आदौ देवतामार्षं छन्दश्च संस्मरेत्। ततः सप्रणवा व्याहृतीरादावावर्त्य ऋषिर्विश्वामित्रो गायत्रीच्छन्दः। ॐकारस्य प्रणवाख्या। ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं इति महाव्याहृतयः[14]। आपो ज्योती रसोऽमृतं ब्रह्मभूर्भुवः स्वरोमिति शीर्षम्।[15]

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।
ये जपन्ति सदा तेषां न भयं विद्यते क्वचित्॥
शतजप्ता[16] तु सा देवी दिनपापप्रणाशिनी।[17]
सहस्रजप्ता तु[18] तथा पातकेभ्यः प्रमोचिनी॥

आदौ देवतामार्षं छन्दश्च संस्मरेत्]; & p. 248 [l.23-26 only]; छ०गो० श्री० p. 27 [reads only l.19 & l.23-24]; नि०प्र०नृ०वा०, p. 63 [3 जलजपे; 4 गायत्र्या परं जाप्ये; om. from कृश ° to गायत्रीच्छंदः; 15 शिरः; om. the verse portion]; प०सं०मा० (v.I.1), p. 303 [reads from कृश °to जपं कुर्यात्; 5 °समासीनः]; ब्रा०स०हला० fol. 45[ reads only नासद्य परमन्तर्जले]; या०स्मृ०अ० I. 23, p. 47 [only from कृश °to जपं कुर्यात्; 5 समासीनः; 7 adds हस्तोपयामैर्ना before कुशपवित्र]; & p. 94 [only देवतां ध्यायन् जपं कुर्यात्]; या०स्मृ०वा०, I.24-25, p. 98 [only कुम्भकेन जपं कुर्यात्]; या०स्मृ०वी०मि०मि०मि०, I.21, p. 62. reads from कुश °to गणयेत् & l.22; 6 कुशोन्तराणां; 11 om. फल; 15 पद्माक्षेन्द्रालरुद्राक्षपुत्र °; om. आदक्ष; 6 °युतां]; वी०मि०मि०मि० (आ) p. 311-313 [14 om. महा; 19 जप्येन; 21 जाप्यात्र; 23 सव्याहृतय; 27 जप्थ °; 28 यो जपेत्; 3० उपांशुः; 32 च; 33 शक्त्या]; सं०र०गो०दी०, p. 228 [as आ०र०ल०, p. 45 [कुशोत्तरीयां वा]; स्मृ०च०दे० (I), p. 144 [reads नाघमर्षणात् to परं जप्यं]; स्मृ०मु०वै०, p. 335 [as स्मृ०च० with v.l. हूतं न (for होमे न).]; & p. 336 [only कृश °to जपं कुर्यात्; 5 समासीनः; 1० ध्याय मंत्रजपं].



दशसाहस्रजापेन[19] सर्वपापप्रणाशिनी।
लक्षजप्ता[20] तु सा देवी महापातकनाशिनी॥
सुवर्णस्तेयकृद्विप्रो ब्रह्महा गुरुतल्पगः।
सुरापश्च विशुध्यन्ति लक्षजापान्न[21] संशयः॥
प्राणायामत्रयं कृत्वा कल्पकल्प[22] समाहितः।
अहोरात्रकृतात्पापात्तत्क्षणादेव मुच्यते॥
सव्याहृतीः[23] सप्रणवाः प्राणायामास्तु षोडश।
अपि भ्रूणहनं मासात्पुनन्त्यहरहः[24] कृताः॥
गायत्री वेदजननी गायत्री पापनाशिनी।
गायत्र्यास्तु परं नास्ति दिवि चेह च पावनम्॥
हस्तत्राणप्रदा[25] देवी पततां नरकार्णवे।
तस्मात्तामभ्यसेन्नित्यं ब्राह्मणो[26] हृदये शुचिः॥
गायत्रीजप्यनिरत[27] हव्यकव्येषु योजयेत्।[28]
तस्मिन्न तिष्ठते पापमब्बिन्दुरिव[29] पुष्करे॥
जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते॥
उपांशुः[30] स्याच्छतगुणः साहस्रो मानसः स्मृतः।
नोच्चैर्जप्यं बुधः कुर्यात्सावित्र्यास्तु विशेषतः॥
सावित्रीजप्यनिरतः स्वर्गमाप्नोति[31] मानवः।
सावित्रीजप्यनिरतो मोक्षोपायं च विन्दति॥
तस्मात्सर्वप्रयत्नेन स्नातः प्रयतमानसः।
गायत्रीं तु जपेद्भक्त्या सर्वकल्मषनाशिनीम्॥

270. शङ्खः नाशुचिर्न जपन्न देवपितृकार्यं कुर्वन्।

[ जपमाला ]

271. शङ्खः शतं स्यात्च्छङ्खमणिभिः सहस्रं तु प्रवालकैः।
स्फाटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते॥

270. वि०पा०अन० (I). p. 273.

271. कृ०स०अ०, p. 119.

पद्माक्षैर्दशलक्षं तु सौवर्णैः कोटिरुच्यते।
कुशग्रन्थ्या च रुद्राक्षैरनन्तं फलमुच्यते॥

272. शङ्खः तिस्रोऽङ्गुल्यस्त्रिपर्वाणि मध्यमा चैकपर्विका।
अनामा मध्यमारभ्य जप एवमुदाहृतः॥

273. शङ्खः प्रारभ्यानामिकायास्तु मध्यमे पर्वणि क्रमात्।
तर्जनीमूलपर्यन्तमङ्गुष्ठेन यथाक्रमम्॥
अनामामूलमारभ्य प्रादक्षिण्यक्रमेण तु।
मध्यमामूलपर्यन्तं जपेद्दशसु पर्वसु॥

274. शङ्खः असंख्यातं तु यज्जप्तं तज्जप्तं निष्फलं भवेत्।

275. शङ्खः अथाङ्गुलीनां रेखाभिः जपमन्वहमाचरेत्।
प्रारभ्यानामिकायास्तु मध्यमे पर्वणि क्रमात्।
तर्जनीमूलपर्यन्तं जपेद्दशसु पर्वसु॥
मध्यमाङ्गुलिमूलं तु यत्पर्वद्वितयं भवेत्।
तं वै मेरुं विजानीयाज्जपेत्तं नातिलङ्घयेत्॥
अनामिकामूलपर्वं प्रारभ्यापि क्रमेण तु।
मध्यमामूलपर्यन्तमङ्गुष्ठेन यथाक्रमम्॥
मध्याङ्गुलेर्मध्यरेखां समारभ्य प्रदक्षिणम्।
मध्यमामूलपर्यन्तमङ्गुष्ठेन यथाक्रमम्॥
स्पृष्ट्वा द्वादशसङ्ख्या स्यादेकवारेण तन्नव।
वामहस्तेन सङ्ख्यातं शतमष्टोत्तरं स्मृतम्॥

[ पूजा ]

276. शङ्खः चन्दनकुङ्कुमकर्पूरमृगजातीफलवर्जमनुलेपनं समाद-द्यात्।

---

272. स्मृ०त०र० (आह्निक), p. 390.
273. स्मृ०र०वे०, p. 97.
274. आ०र०ल०, p. 45.
275. स्मृ०मु०वै०, p. 343.
276. स्मृ०च०हे० (I), p. 201.



277. शङ्खः शङ्खचक्राद्यङ्कनं च तुलसीदलभक्षणम्।
ये कुर्यान्नियतं भक्त्या स याति परमां गतिम्॥
नान्यं देवं नमस्कुर्यान्नान्यं देवं निरीक्षयेत्।[1]
चक्राङ्कितः सता तिष्ठेन्मद्भक्तः पाण्डुनन्दन॥

278. शङ्खः शङ्खपात्रस्थितं गन्धं मन्त्रैर्दद्यात्कनिष्ठया।

[ तर्पणम् ]

279. शङ्खः दर्भाः कृष्णाजिनं[1] मन्त्रा ब्राह्मणाश्च[2] विशेषतः।
अयातयामान्येतानि नियोज्यानि पुनः पुनः॥

280. शङ्खः कुशाभावे[1] द्विजश्रेष्ठः काशैः कुर्वीत यत्नतः।[2]
तर्पणादीनि कर्माणि काशाः कुशसमाः स्मृताः॥

281. शङ्खः ये त्वन्तर्गर्भिता दर्भा ये च छिन्नास्तथैव च।
क्वथितानग्निदग्धांश्च कुशान्यत्नेन वर्जयेत्॥

282. शङ्खः अमावास्यासु[1] न छिन्द्यात्कुशांस्तु[2] समिधस्तथा।
सर्वत्रावस्थितो सोमे हिंसायां ब्रह्महा भवेत्॥

---

277. आ०म०नी०, p. 37, वि०पा०मद० (III), p. 204 [1 समर्चयेत्].
278. आचारेन्दु त्र्य०, p. 153.
279. आचारेन्दु त्र्य० p. 37 [2 अविरग्नयः]; प०सं०गा० (v.I.1), p. 256; वि०पा०मद० (III), p. 164, [2 गोर्हूताशनः]; स्मा०शि०, p. 415 [2 हविरग्नयः]; स्मृ०च०दे० (I), p. 107; स्मृ०मु०वै०, p. 233 [1 ° जिना; 2 हविरग्नयः (also); 3 संयोज्यानि]; स्मृ०र०वे०, p. 120 [transp. दर्भाः & मन्त्राः; reads 1.2 as अयातयामास्ते सर्वे नियोज्याः स्युः पुनः पुनः].
280. आ०र०ल० p. 25 [1 दर्भाभावे द्विजकर्म; 2 संयतः, om. 1.2]; प०सं०मा० (v.I.11), p. 255; स्मा०शि०, p. 144; स्मृ०च०रे० (I), p. 109, [1 कुशालाभे], स्मृ०मु०वै०, p. 234 [1 कुशालाभे].
281. या०स्मृ०वा०, I. 225, p. 502.
282. आ०र०ल०, p. 25 [1 अमायां चैव; 2 च; om. 1.2] स्मृ०च०दे० (I), p. 126.

283. शङ्खः
अमावास्या तु सोमेन[1] सप्तमी भानुना सह।
चतुर्थी भूमिपुत्रेण[2] सोमपुत्रेण[3] चाष्टमी।।
चतस्रस्तिथय[4]स्त्वेतास्तुल्याः स्युः[5] ग्रहणादिभिः।
सर्वमक्षयमत्रोक्तं स्नानदानजपादिकम्।।

284. शङ्खः
तस्मिन्नहनि नाश्नीयादग्रस्तास्तं यावदेव तु।
मुक्तं दृष्ट्वा तु भुञ्जीत स्नात्वा चैव यथाविधि।।

285. शङ्खः
विशाखासु यदा भानुः कृत्तिकासु च चन्द्रमाः।
स योगः पद्मको नाम पुष्करेष्वपि दुर्लभः।।

286. शङ्खलिखितौ
अमावास्या व्यतीपातो ग्रहणं चन्द्रसूर्ययोः।
मन्वादयो युगादिश्च संक्रान्तिर्वैधृतिस्तथा।।

287. शङ्खः
वापीकूपतडागेषु[1] गिरि[2]प्रस्रवणेषु च।
नद्यां नदे देवखाते सरसीषूद्धृताम्बुनि।।[4]
उष्णोदकेन वा[5] स्नायाद्ग्रहणे चन्द्रसूर्ययोः।

---

283. कृ०र०ख०, fol. 53 [5 सूर्यग्रह °; om l.4]; च०चि०हे० (दान० v.1), p. 66 [1 सोमे तु]; & (प्राय:), p. 644 [2 बुधवारेण; 4 °पुण्या:]; दान०क०क० fol. 12 [om. l.4]; दा०म०नी०, p. 3; नि०अ०, p. 41 [3 सूर्यपुत्रेण; 5 सूर्यग्रहणसन्निभा:]; & p. 144 [5 as in p. 41; l.4 as स्नानं दानं तथा श्राद्धं सर्वं तत्राक्षयं भवेत्]; पु०चि०वि० p. 121 [om. l.4; 5 as नि०अ०, p. 41]; & p. 400 [as वि०अ०, p. 144]; वी०मि०मि०मि०, p. 248 [3 बुधवारेण; 4 पुण्या:]; श्रा०म०बा०, p. 136 [5 and l.4 as नि०अ० p. 144]; स०म०नी०, p. 68 [as श्रा०म०]; स्मृ०च०रे० (III), p. 345; स्मृ०मु०वै०, p. 744 [5 सूर्यग्रहणसन्निभा:].

284. च०चि०हे० (परि०), p. 380.

285. च०चि०हे० (परि०), p. 639; पु०चि०वि०, p. 536.

286. दा०म०नी०, p. 3.

287. का०सा०गदा० (I), p. 591 [1 नदी; 2 नद; 5 केऽपि]; नि०अ०, p. 215; नि०स०क०, p. 45; पु०चि०वि०, p. 437; वि०पा०मद० (II), p. 465; स०म०नी०, p. 77 [4 also °ताम्भसि]; स्मृ०मु०वै०, p. 271 [3 °णेऽपि०वा; 4 °ताम्बुभि:]; स्मृ०र०वे०, p. 52 [4 °ताम्बुषु; 5 केऽपि].



288. शङ्खः
स्नातः कृतजप्योऽन्तर्जानुरुदङ्मुखश्च दिव्येन तीर्थेन देवानुदकेन तर्पयेत्। अथ तर्पणविधिः। ॐ भगवन्तं शेषं तर्पयामि। कालाग्निरुद्रं सन्तानवराहमजिनं रुक्म-भौमं शैलभौमं ललाटभौमं रक्तभौमं श्वेतभौमं कृष्ण-भौममिति पातालसप्तकम्। जम्बुद्वीपं शाकद्वीपं कुशद्वीपं क्रौञ्चद्वीपं शाल्मलिद्वीपं प्लक्षद्वीपं पुष्करद्वीपमिति द्वीपसप्तकम्। लोकालोकाख्यं पर्वतं सुधानामानं शङ्खपदं केतुमन्तं हिरण्यरोमाणमिति कल्पस्थायिनो लोक-पालान्। लवणोदकं क्षीरोदकं घृतोदकं सुरोदकमिक्षुर-सोदकं स्वादूदकमिति समुद्रसप्तकम्। सागरचतुष्कम्। शृङ्गवनां श्वेतं नीलं मेरुं माल्यवन्तं गन्धमादनं निषेधं हेमकूटं हिमवन्तमिति महापर्वतान्। महेन्द्रं मलयं सह्यं शुक्तिमन्मृक्षवन्तं विन्ध्यं पारिपात्रमिति सप्तकुल-पर्वतान्। कैलासमैनाकप्रमुखांश्च सप्तपर्वतान्। बिन्दु-सरःप्रमुखानि सरांसि। सप्तप्रवाहां गङ्गाम्। त्रिलोक-वाहिनीं गङ्गाम्। सिन्धुम्। सरस्वतीम्। यमुनाम्।

---

288. आ०र०ल०, p. 68, [reads from आसप्तमात् to जानीयात्; adds तावतां तर्पणं कुर्यात्]; & p. 64 [cont. from पितृपक्षा upto सुहृदां कुर्यात्]; & p. 64 [reads only last st. हिमेन सह; हिम्ना च (for हिमेन).]; आ०सा०गदा०, p. 260 [om. from अर्थ तर्पण विधि: upto प्रकाशमुदकं दधात्; राजतौदुम्बरेण वा in l.3 for the post half, reads only last two sts.]; & p. 275.[reads पित्रे पितामहाभ्यां च मात्रे दधात्ततो जलम्। पितामहौ ततो दद्यान्मातामहकुले ततः।]; कृ०क०ल० (III), p. 124-132; कृ०र०ख० fol. 117, [1 हि पात्रेण राजतौदुम्बरेण पात्रेण वो उदकं पितृतीर्थं स्पृशन्दद्यात्; om. further]; गृ०र०च०, p. 255 [om. from अथतर्पण विधि: onwards]; छ०गो० श्रीदत्त०, p. 21-22 [reads from सौवर्णेन पात्रेण; om. st. 1; तथा (for [अ]थवा).]; नि० प०वा०वि०, p. 220 [reads only पित्रे to ततः]; नि०प्र०नृ०वाज०, p. 627 [as नि०प०वा०वि०]; ब्रा०स०हला० fol. 54 [reads from सौवर्णेन to स्पृशन् दद्यात्; adds तु before पात्रेण; om. खड्गपात्रेण; 3 शङ्कुनावापि उदकं; adds उदकं उदकं before पितृतीर्थं–then cont. versas.]; वी०मि०मि०मि० (आह्निक), p. 343 [as कृ०र०]; & p. 356-360.

प्रथमपुष्करम्। द्वितीयपुष्करम्। तृतीयपुष्करम्। प्रयागम्। नैमिषम्। गयाशीर्षम्। सर्वतीर्थानि। सर्वप्रस्त्रवणानि। सर्वाः सरितः। इन्द्रतीर्थम्। अश्वत्थप्रमुखान् वनस्पतीन्। यवप्रमुखाः ओषधीः। मानसोत्तराख्यं पर्वतम्। लोक-पालान्। इन्द्रम्। शचीम्। वज्रम्। ऐरावतम्। मातलिम्। चित्रसेनप्रमुखान् गन्धर्वानप्सरसः। मुदो नामाप्सरसः। पशुनो नामाप्सरसः। आयुवो नामाप्सरसः। सुधाना-माप्सरसः। पृष्ट नामाप्सरसः। ऊर्जो नामाप्सरसः। अग्निसन्ताम्। स्वाहाम्। अग्नीध्रम्। यमम्। धर्मम्। श्रियम्। सत्यम्। तपः। संयज्ञम्। दक्षिणाम्। दीक्षाम्। ब्रह्मचर्यम्। व्यवसायम्। धर्मराजानम्। दण्डम्। पिङ्गलम्। कालपाशौ। आयुधम्। स्वर्गम्। मृत्युम्। चित्रगुप्तम्। यमपुरुषान्। श्यामशबलौ। विरूपाक्षम्। नैर्ऋतिम्। धर्मप्रधानान्। दैत्यान्। दानवान्। विद्याधरान्। यक्षान्। राक्षसान्। पिशाचान्। रोगान्। ज्वरम्। रोगाधिपम्। आरोग्यम्। वरुणम्। गौरीम्। नागान्। वासुकिम्। अनन्तम्। सर्पान्। वनस्पतीन्। वायुम्। शिराम्। प्राणापानसमानोदानव्यानान्। इन्द्रियाणि। इन्द्रियार्थान्। जीवम्। सोमम्। नक्षत्राणि। वर्तमानं नक्षत्रम्। पितॄन्। आभास्वरम्। बर्हिषदः। अग्निष्वात्तान्। क्रव्यादान्। तद्रूपान्। आज्यपान्। सुकालिनः। महादेवम्। पार्वतीम्। सेनानीम्। स्कन्दम्। विशाखम्। स्कन्दग्रहान्। बालग्रहान्। स्कन्दपार्षदान्। रुद्रापार्षदान्। भूतानि। भौमान् रुद्रान्। अन्तरिक्षान् रुद्रान्। विद्यारुद्रान्। सर्वगतान् रुद्रान्। मातृः योगीश्वरीम्। देवपत्नीः। देवमातृगणान्। धनाधिपान्। विनायकम्। मितम्। संमितम्। शालकटङ्कटौ। कूष्माण्डम्। राजपुत्रान्। धर्मम्। अर्थम्। कामम्। गतिम्। निद्राम्। क्षुधम्। अदितिम्। आयतिम्। नियतिम्। कीर्तिम्। प्रज्ञाम्। धृतिम्। मेधाम्। आकृतिम्। रुचिम्। श्रद्धाम्। वाणीम्। सरस्वतीम्। दक्षम्। दाक्षायणीम्। प्रजापतीन्।



सनकम्। सनातनम्। सनन्दम्। सनत्कुमारम्। ऋतुम्। पितॄन्। ब्रह्मर्षीन्। देवर्षीन्। महर्षीन्। राजर्षीन्। ऋषिकान्। ऋषिपत्नीः। ऋषिपुत्रान्। गायत्रीम्। उष्णिहम्। अनुष्टुभम्। बृहतीम्। त्रिष्टुभम्। पङ्क्तिम्। जगतीम्। सर्वछन्दांसि। गरुडम्। अरुणम्। हव्यजातम्। सुरभिम्। दिङ्नागान्। उच्चैःश्रवसम्। धन्वन्तरिम्। भुवननागान्। दिङ्नागान्। कुलनागान्। विश्वकर्माणम्। वैश्रवणम्। ऋद्धिम्। नलकूबरम्। रैवतम्। शङ्खपद्मौ। नहुषपुत्रं तत्पत्नीम्। तत्प्रजाम्। कश्यपं तत्पत्नीम् तत्प्रजाम्। प्रजापतिं तत्पत्नीं तत्प्रजाम्। चन्द्रं तत्पत्नीं तत्प्रजाम्। अरिष्टनेमिं तत्पत्नीं तत्प्रजाम्। कृशानुम्। जायाम्। अजाम्। अस्त्राणि। शस्त्राणि। ऋग्वेदम्। यजुर्वेदम्। सामवेदम्। अथर्ववेदम्। इतिहासम्। पुराणम्। धनुर्वेदम्। गान्धर्ववेदम्। आयुर्वेदम्। फलवेदम्। ज्योतिषम्। शिक्षाम्। कल्पम्। व्याकरणम्। निरुक्तम्। छन्दोविचितम्। धर्मशास्त्राणि। भरतम्। मनुम्। विष्णुम्। यमम्। अङ्गिरसम्। वसिष्ठम्। नारदम्। दक्षम्। संवर्तम्। शातातपम्। पराशरम्। आपस्तम्बम्। औशनसम्। कृष्णद्वैपायनम्। कात्यायनम्। बृहस्पतिम्। गौतमम्। शङ्खम्। लिखितम्। हारीतम्। अत्रिम्। याज्ञवल्क्यम्। अथ भगवन्तं धर्मम्। उत्तानपादम्। यज्ञम्। नारायणम्। नासत्यम्। वरुणार्यमाणौ। संवत्सरम्। मित्रम्। इन्द्राग्नी। मरीचिकश्यपौ। ध्रुवम्। अगस्त्यम्। धातारम्। मार्तण्डम्। रामम्। वाल्मीकिम्। महाकल्पम्। कल्पम्। मन्वन्तरम्। वर्तमानमिन्द्रम्। ओजस्विनम्। स्वायंभुवम्। स्वारोचिषम्। औत्तमम्। तामसम्। रैवतम्। चाक्षुषम्। महातेजसम्। वैवस्वतम्। अर्कसावर्णिम्। ब्रह्मसावर्णिम्। रुद्रसावर्णिम्। दक्षसावर्णिम्। धर्मसावर्णिम्। रौच्यम्। भौत्यम्। युगम्। वर्तमानं संवत्सरम्। वर्तमानमयनम्। वर्तमानमृतुम्। वर्तमानं मासम्। वर्तमानं पक्षम्। वर्तमानमादित्यम्। सोमम्। कुजम्। बुधम्। जीवम्। शुक्रम्। शनैश्चरम्।

राहुम्। केतुम्। ऋक्षाणि। वर्तमानं दिवसम्। वर्तमानं रात्रिम्। संध्ये। किंपुरुषान्। सर्वाणि भूतानि। देवानुचरान्। देवानुगान्। ॐ एकज्योतिषम्। द्विज्योतिषम्। त्रिज्योतिषम्। चतुर्ज्योतिषम्। एकशक्रम्। द्विशक्रम्। त्रिशक्रम्। इन्द्रम्। आपोदृशम्। नभः। प्रविशक्यम्। मितम्। सम्मितम्। ऋतुजितम्। सत्यजितम्। सुषेणम्। सेनजितम्। अतिमित्रवन्मित्रम्। पुरुषमित्रम्। धृतम्। धर्तारम्। विधर्तारम्। वरुणम्। ध्रुवम्। धातारम्। विधातारम्। ईदृशम्। एषादृशम्। सदृशम्। प्रतिसदृशम्। अमृताशिनम्। प्रीतिनम्। युगम्। वृक्षम्। सरसमतिम्। धन्वन्तरिम्। उग्रम्। धुनिम्। भीमम्। अतियुक्तम्। ऋक्षपादम्। सहम्। द्युतिम्। वायुम्। अधृष्यम्। वासम्। कासम्। जयम्। विजयम्। इत्येकोनपञ्चाशन्मरुतः। भुवनम्। भावनम्। पर्जन्यम्। स्वजन्यम्। ऋतुम्। वसुम्। मूर्धानम्। वाजम्। वाजस्तवम्। प्रसवम्। आप्यायनम्। ऋक्षम्। इति द्वादशभृगून्।। मनुम्। मन्वन्तरम्। प्राणम्। चितिम्। छयम्। मयम्। हंसम्। नरम्। नारायणम्। विभुम्। प्रभुम्। इति द्वादशसाध्यान्।। सवितारम्। धातारम्। मित्रम्। अर्यमणम्। पूषणम्। अंशुम्। त्वष्टारम्। विवस्वन्तम्। इन्द्रम्। विष्णुम्। वरुणम्। भगम्। इति द्वादशादित्यान्। पावकम् [ पिनाकिनम्। मृगव्याधम्। सर्पम् ] सूर्यम्। निर्ऋतिम्। हरम्। अजैकपादम्। अर्हि-बुध्न्यम्। धूमकेतुम्। कपालिनम्। इत्येकादशरुद्रान्। आत्मानम्। अजमनम्। ऋक्षम्। सत्यम्। इति द्वादशा-ङ्गिरसः। ऋतुम्। दक्षम्। वसुम्। सत्यम्। कालम्। कामम्। धुरिम्। रोचनम्। मार्द्रवम्। पुरूरवसम्। इति दश विश्वान्देवान्। धरम् ध्रुवम्। सोमम्। आपम्। अनलम्। अनिलम्। प्रत्यूषम्। प्रभासम्। इत्यष्टौ वसून्। नासत्यं दस्रमित्यश्विनौ। एतान् देवागणान् सानुचरान्। स्वायंभुवम्। सावित्रीम्। सर्वान्देवान्। सतीम्। देवीम्।



लक्ष्मीम्। धराम्। अनिरुद्धम्। प्रद्युमम्। संकर्षणम्। वासुदेवम्। भूलोकम्। भुवर्लोकम्। स्वर्लोकम्। महर्लोकम्। जनलोकम्। तपोलोकम्। सत्यलोकम्। ब्रह्माण्डम्। पृथिवीम्। अपः। वह्निम्। वायुम्। आकाशं। मनः। शुद्धिम्। आसनम्। अव्यक्तं पुरुषं तर्पयामीति। इदं चान्ते प्रत्यृचं पुरुषसूक्तेनाञ्जलीन्दद्यात् पुष्पाञ्जलिं च भक्त्या। अथ कृतापसव्यो दक्षिणाभिमुखेऽन्तर्जानुः पित्र्येण तीर्थेन पितृणां यथाश्राद्धं यथाप्रकाशमुदकं दद्यात्। सौवर्णेन पात्रेण राजतेनौदुम्बरेण खड्गपात्रेण वा। शङ्कुनाप्युदकं पितृतीर्थं स्पृशन्दद्यात्। पित्रे पितामहाय प्रपितामहाय मात्रे पितामह्यै प्रपितामह्यै वा। [ मातामहाय प्रमातामहाय वृद्धप्रमातामहाय मातामह्यै प्रमातामह्यै वृद्धप्रमातामह्यै ] च। आसप्तमा-त्पुरुषात् पितृपक्षे यावतां नाम जानीयात्। पितृपक्षाणा-मुदकतर्पणं कृत्वा गुरूणां कुर्यात्। गुरूणां कृत्वा मातृपक्षाणां कुर्यात्। मातृपक्षाणां कृत्वा सम्बन्धिबान्धवानां कुर्यात्। तेषां कृत्वा सुहृदां कुर्यात्। भवति चात्र वचनम्।

विना रूप्यसुवर्णेन विना ताम्रतिलेन च।
विना दर्भैश्च मन्त्रैश्च पितृणां नोपतिष्ठते।।
सौवर्णराजताभ्यां तु खड्गेनौदुम्बरेण वा।
दत्तमक्षय्यतां याति पितृणां तु तिलोदकम्।।
हिमेन सह यद्दत्तं क्षीरेण मधुनाथवा।
तदप्यक्षयतां याति पितृणां च तिलोदकम्।।

289. शङ्खः अक्षय्यमस्त्विति प्रोक्तः प्रत्येकं पितृतः क्रमात्।
290 शङ्खः पित्रेण पितृन्।
राजते मनसा पायात् सौवर्णे हस्तनिर्गतम्।

289. पा०गृ०सू० (परि०), p. 482.
290. नि०प्र०नृ०वाज०, p. 90.

291. शङ्खः "ततः सम्मार्जने जले"।

292. शङ्खलिखितौ नेष्टकाचिते पितृंस्तर्पयेत्।[1] वापीतडागोदपानेषु[2]
सप्त पञ्च त्रीन्वा पिण्डानुद्धृत्य देवपितृंस्तर्पयेत्।[3]

293. शङ्खः उदकेनोदकं [1]कुर्यात्पितृभ्यश्च[2] कदाचन।
उत्तीर्य च शुचौ देशे कुर्यादुदकतर्पणम्॥

294. शङ्खः स्नातः सन्तर्पणं कृत्वा पितृणां तु तिलाम्भसा।
पितृलोकमवाप्नोति[1] प्रीणाति च[2] यथा पितॄन्॥

295. शङ्खः 'कायं कनिष्ठिकामूलम्', कनिष्ठमूलस्य कायं प्राजापत्यं दैवमिति, तर्जन्यङ्गुष्ठमध्यस्य पित्र्यम्। 'अङ्गुष्ठमूलस्य ब्राह्मम्' अङ्गुल्यग्रस्य दैवम् आर्षम्। हस्तमध्यस्य आग्नेयं ब्राह्मम्।

---

291. नि०प्र०नृ०वाज०, p. 522.

292. आ०र०ल०, p. 63; आ०सा०गदा०, p. 221 [स्नायात् तदा गोदकनिपानकूपेषु सप्त; 2 om. वा]; & p. 260 [om from यापी to तर्पयेत्]; कृ०क०ल० (III), p. 42 [1 न वापीतदागोपदानेषु; 2 om. वा]; & p. 43 [सप्तत्रयमृत्पिण्डोद्धरणं तत्तर्पणार्थं यथासंख्यं वापीकूपतडागविषयम्]; का०वि०जी०, p. 329; गृ०र०च०, p. 199 [3 om. देव]; & repeats on, p. 265; ब्रा०सर्व०हला०, fol. 53 [om. देवपितृन्]; या०स्मृ०बा० I. 159, p. 421 [om. from नेष्टका to तर्पयेत् (first).] वी०मि०मि०मि० (आह्निक), p. 172 [3 देवर्षि पितृन्]; & p. 340 [as या०स्मृ०बा०]; शू०शि०शे०, p. 114; स्मृ०च०दे० (III), p. 385 [om from वापी to तर्पयेत्]; स्मृ०त०र०, p. 371 [नेष्टाकारचिते स्थाने पितृस्तर्पयेत् om. further].

293. आ०म०नी०, p. 55 [1 दद्यात्]; आ०सा०गदा० (II), p. 203 [om. l.2]; नि०प्र०नृ०वाज०, p. 612 [om. l.2; 1 दद्यात्]; स्मृ०च०दे० (I), p. 192 [2 तु (for च).].

294. कृ०क०ल० (III), p. 134 [1 पितृयज्ञम्; 2 तथा]; नि०प्र०नृ०वाज०, p. 609; स्मृ०च०दे० (I), p. 196.

295. या०स्मृ०वी०मि०मि०मि० I.21, p. 40.



296. शङ्खः कायं कनिष्ठिकामूले[1] तीर्थमुक्तं द्विजस्य तु।
अङ्गुष्ठमूले च तथा प्राजापत्यं प्रकीर्तितम्॥

297. शङ्खलिखितौ उभाभ्यामपि हस्ताभ्यां प्राङ्मुखो यज्ञोपवीती प्रागग्रैः कुशैर्देवतातर्पणं देवतीर्थेन कुर्यात्।

298. शङ्खः उभाभ्यामपि हस्ताभ्यामुदकं यः प्रयच्छति।
स मूढो नरकं याति कालसूत्रमवाक्शिराः॥

299. शङ्खः आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यत्विति क्रमात्।
जलाञ्जलित्रयं[1] दद्यादेतत्संक्षेपतर्पणम्॥

300. शङ्खः एवं यः सर्वभूतानि तर्पयेदन्वहन्द्विजः।
स गच्छेत्परमं स्थानं तेजोरूपमनामयम्॥[1]

301. शङ्खः पूर्वाग्रैस्तर्पयेद्देवानुदगग्रैश्च मानवान्।
तानेव द्विगुणीकृत्य तर्पयेत्प्रयतः पितॄन्॥

302. शङ्खलिखितः शुष्केणान्तर्जले चैव बहिरप्यार्द्रवाससा।
स्नानं दानं जपो होमो निष्फलं पितृतर्पणम्॥

303. शङ्खः श्राद्धे विवाहकाले च पाणिनैकेन दीयते।
तर्पणं तूभयेनैव विधिरेषः सनातनः॥

---

296. आ०र०ल०, p. 15 [om. l.2]; कृ०क०ल० (I) p. 53; वी०मि०मि०मि० (परि०), p. 76 [1 कनीनिका].

297. आ०भ०त्र्य० p. 164; प०सं०मा० (v.I.1), p. 351-352; म०पा०मद० (III), p. 291 [om. prior half of l.1]; या०स्मृ०अ०, I. 101, p. 38 [1 adds संवृत्ताङ्गुष्ठकाभ्यां after हस्ताभ्यां]; स्मृ०मु०वै० p. 376; स्मृ०सा०वि०, p. 276.

298. स्मृ०सा०वि०, p. 276.

299. आ०र०ल०, p. 31; म०पा०मद० (v.II.1), p. 64; वि०पा०अन० (II), p. 190; वि०मि०मि०मि०, p. 145; स्मृ०त०र०, p. 379 [1 अञ्जलित्रयं].

300. म०पा०मद० (III), p. 296; वि०पा०अन० (II), p. 276 [1 °निरामयम्]; स्मृ०सा०वि०, p. 277.

301. आ०र०ल०, p. 64.

302. स्मृ०च०दे० (I), p. 192.

303. स्मृ०सा०वि०, p. 276.

304. शङ्खः एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः।
अर्हन्ति पितरस्त्रींस्त्रींस्त्रियस्त्वेकैकमञ्जलिम्॥

305. शङ्खः नोदकेषु न पात्रेषु न क्रुद्धो नैकपाणिना।
नोपतिष्ठति तत्तोयं यन्न[1] भूमौ प्रदीयते॥

306. शङ्खः नामतस्तु स्वधाकारैस्तर्प्याः स्युरनुपूर्वजाः।

307. शङ्खः स्नानमाचमनं दानं देवतापितृतर्पणम्।
शूद्रोदकैर्न कुर्वीत तथा मेघाद्विनिसृतैः॥

[ पञ्चमहायज्ञाः ]

308. शङ्खः पञ्चसूना गृहस्थस्य चुल्लीपेषण्युपस्करः।
कण्डनी चोदकुम्भश्च तस्य पापस्य शान्तये॥

309. शङ्खः पञ्चयज्ञविधानं तु[1] गृही नित्यं[2] न हापयेत्।

310. शङ्खः शेषभुग् [1]पञ्चमहायज्ञानहरहर्निर्वपेदा[2]पत्रशाकोद-
केभ्यः।

311. शङ्खलिखितौ अत ऊर्ध्वं देवयज्ञः सर्वेषामुपदिश्यते। आश्रम[1]धर्म-

---

304. आ०र०ल०, p. 65.

305. आ०सा०गदा० (II), p. 263 [1 यत्र]; गृ०र०च०, p. 264; नि०प्र०नृ०वाज०, p. 612; ब्रा०सर्व०हला०, fol. 53.

306. नि०प्र०वा०, p. 223.

307. नि०सि०क०, p. 295; स्मृ०न०र० (प्राय०), p. 554.

308. स्मृ०च०दे० (I), p. 208.

309. आ०र०ल०, p. 93 [1 च; 2 यज्ञं]; या०स्मृ०बा०, I. 102. p. 344; वि०पा०मद० (III), p. 304; शू०क०, p. 36 & p. 62; सं०र०गो०दी०, p. 925; स्मा०शि०, p. 292 [1 च]; स्मृ०च०दे० (I). p. 208.

310. कृ०क०ल० (III), p. 142; गृ०र०च०, p. 274. [पञ्चमहायज्ञान्निर्वपे °]; & p. 59 [only अहरह: पञ्चयज्ञान्निर्वयेत्]; वी०मि०मि०मि० (आह्निक), p. 388 [1 महायज्ञानहरह °; 2 आपन्नः]; & p. 395. [as छ०गो०].

311. कृ०क०ल० (III), p. 152; वि०मि०मि०मि० (आह्निक), p. 394 [1 धर्माविरोधेन; 2 कुलस्योद्दालक; upto निर्वपणीयम्; om further]; & p. 404 [1 & 2 as p. 394; 3 जप०प्र० °].



विरोधेन प्रीतिनियतामौषधीनां कोद्रवचणकमाषम-
सुरोद्दालक[2]कुलत्थवर्ज्यं निर्वपणीयम्। तण्डुलान्वा
प्रातः पत्न्यै दद्यात्। स्वयं वाधिश्रयेत्। सुसंमृष्टगृह-
द्वारोपलेपन[3]धूपजप्यप्रयतो नियतः सायं प्रातरन्नादा-
वश्यकानि कुर्यात्। अग्नये जातवेदसे स्वाहेत्यग्नौ।
तूष्णीं द्वितीयाम्। उदुत्यं जातवेदसमित्यादित्यमुप-
तिष्ठेत्।

312. शङ्खलिखितौ ब्रह्मणे नम इति ब्रह्मस्थले बलिं हरेत्। सोमयेत्युद-
कुम्भे। वायव इति वास्तुगृहे। गृहपतय इति गृहद्वारे।
प्रजापतय इति गर्भगृहे। शन्नो देवीरित्यग्निकार्ये।
दिक्पतिभ्यस्तेभ्यस्तत्पुरुषेभ्य[1] इति पश्चिमार्धे।[2]
सोमाय सोमपुरुषेभ्य इत्युत्तरार्धे। ब्राह्मणे ब्रह्मपुरुषे-
भ्यः प्रतिदिशम्। नक्षत्रग्रह देवताभ्योऽन्तरिक्षे। सर्वतः
पशूनां पतये। नमो देवेभ्य इति प्रागुदीच्याम्।
ब्रह्मस्थले स्वधा पितृभ्य इति दक्षिणेन निर्वाप्य
गोदोहमात्रं कालमाकाङ्क्षेदतिथिम्।[3]

313. शङ्खमनुशातातपाः
एक[1]मप्याशयेद्विप्रं [2]पित्रर्थे पाञ्चयज्ञिके[3]।
न चैवात्राशयेत्किञ्चिद्वैश्वदेवं प्रति द्विजम्॥

---

312. आ०सा०गदा० (II), p. 325 [only गोदोहमात्रं]; कृ०क०ल० (III), p. 162 & p. 176. [as आ०सा०]; ब्रा०सर्व०हला० fol. 87 [reads आगोदोहनमात्रं कालमाकाङ्क्षेदतिथिम्]; वी०मि०मि०मि० (आह्निक), p. 404 [1 om. तेभ्यः; 2 om. from पश्चिमार्धे to पुरुषेभ्यः; 3 [आ]चक्षेत् (for [आ]काङ्क्षेत्).]; & p. 442 [as आ०सा०]; स्मृ०मु०वै० p. 408, [गोदोहमात्रमंगलेऽतिथीम् प्रतीक्षमाणं आसीत्].

313. आ०सा०गदा० (II), p. 326 [1 अप्येकमाशयेद्विप्रं पित्रार्थं; 3 °ज्ञियम्]; कृ०क०ल० (III). p. 169 [2 also पित्रर्थं].

314. शङ्खमनुशातातपाः

दद्यादहरहः[1] श्राद्धमन्नाद्येनोदकेन च।[2]
पयो मूलफलैर्वापि पितृभ्यः प्रीतिमाहरन्॥[3]

315. शङ्खः

अन्नं व्याहृतिभिर्हुत्वा तथा मन्त्रैश्च शाकलैः।
प्र( सु )विभज्य च भूतेभ्यस्ततोऽश्नीयादनग्निमान्॥

316. शङ्खलिखितौ

अतिथिः[1] श्रोत्रियो वेदव्रती यतिधर्मा नैष्ठिकः समानवृत्तिर्योऽन्यो[2] वाऽभ्यागच्छेत्तस्मिन्काले[3] तमर्चयित्वाऽश्नीयात्। कुशवृत्तेरपि ब्राह्मणो ह्यनश्नन्[4] सुकृतमादत्ते। पर्यश्वतः प्रजाः[5] कृनाति। प्रार्थयन्ते तथा सर्वे निपानं मृगपक्षिणः। एवं गृहस्थं संपन्नं प्रार्थयन्तीह साधवः॥ नावमन्येत विद्वांसं ब्राह्मणम्। ब्राह्मणो ह्यग्निरिवाप्रमेयः सर्व एव। यथा प्रणीतश्चाप्रणीतश्चाग्निर्हि दैवतमेवं विद्वांश्चाविद्वांश्च ब्राह्मणः पूज्य एव सर्वेषाम्। यत्र हि ब्राह्मणो न भुङ्क्ते तद्धुतमप्यग्नावहुतमेवास्य तद्धविः। तत्र देवा अपि न गृह्णन्ति स्वं भागम्। अतिथिदेवा हि ब्राह्मणाः। ब्राह्मणानां प्रसादाद्देवा अपि स्वर्गमजयन्।

314. आ०सा०गदा० (II), p. 327 [2 वा]; कृ०क०ल० (III), p. 169 [also 1 कुर्यादहरहः; 2 बा०; 3 प्रीतिमावहन्].

315. स्मा०शि०, p. 285.

316. आ०सा०गदा० (II), p. 237-238 [reads from वयोवर्ण; 7 पादमहर्याचमनीं; 8 om. शक्तितो; 9 om portion in the brackets; 10 om. समेत्य न्यायतो निवर्तेत; 11 विद्योद्याना; 12 om. सभा and reads वापी for प्रपा; 13 महाहृद्य; 15 पुनर्दर्शय]; & p. 325 [om. अतिथिः; 3 om. वा; om. from तमर्चयि onwards]; कृ०क०ला० (III), p. 176-178; गृ०र०च०, p. 292 [om. अतिथिः; om. from कृशवृत्ते onwards]; ब्रा०सर्व०हला० fol. 87 [om. from पर्यश्रतः onwards] या०स्मृ०अ०, I. 112, p. 156 [reads from सहासीन to निवर्तेत; 1० समभ्यनुज्ञातो]; या०स्मृ०बा०, I.107, p. 356 [reads only from कृशवृत्ते to मादत्ते]; वी०मि०मि०मि० (आह्निक), p. 442-443 [3 om. [अ]भि-; 4 om. हि; 5 पूजां; om. the portion which is in brackets; 13 महागम-; 14 अन्यतम-].



वयोवर्णविद्यातपः[6] संपन्नाय पाद्यमर्घ्य[7] माचमनीयमन्त्रविशेषान् तस्मै[8] शक्तितो दद्यात्। [ प्रियप्रश्नोत्तरेण ][9] सहासीत [ यानन्तमायानारोहणादयानवन्तमनुज्ञापर्यन्तमननुज्ञान आसीमान्तमनुव्रज्य विसर्जयेत्। यदि तत्रैव वस्तुमिच्छेत् तदा शय्यादिना शयनोपकरणेन पूजयेत्। ] प्रदोषेऽनुज्ञाप्य शयीत। पूर्वं प्रतिबुध्येत। प्रस्थितमनुव्रजेत्।[10] समेत्य न्यायतो निवर्तेत। वेद्यु[11] द्यानारामसभा[12] प्रपातडागदेवगृहमहाद्रुम[13] स्थाननदीनामन्येत[14] रस्मिंस्तं प्रदक्षिणं कुर्याद् वाचमुत्सृज्य पुनर्दर्शनायेति।[15]

317. शङ्खलिखितौ

देवान्भृत्यातिथींश्चैव पितॄनात्मानमेव च।
प्रकृतान्नावमन्येत[1] तेषां शिष्टं समश्नुयात्॥[2]

318. शङ्खलिखितौ

नाब्राह्मणोऽतिथिर्ब्राह्मणस्य श्रोत्रियाय गुणवते[1] आतिथ्यम्। राजन्यवैश्याभ्यां मित्रवत्। शूद्रस्या[2] नृशंस्यार्थम्।

319. शङ्खलिखितौ

हविरित्येवं साङ्गुष्ठमन्नविधिं ब्राह्मणेभ्यो दद्यात्।

320. शङ्खः

न यज्ञैर्दक्षिणावद्भिः बहिः शुश्रूषया तथा।
गृही स्वर्गमवाप्नोति यथा त्वतिथिपूजनात्॥

321. शङ्खः

वृत्तन्तु न त्यजेद्विद्वन्पूर्वमेव सदर्जितम्।[1]
कर्मणा जन्मना शुद्धमिज्ययाध्ययनेन च॥

### [ भोजनविधिः ]

322. शङ्खः

पञ्चार्द्रो भोजनं कुर्याद्भूमौ पात्रं निधाय च।
उपवासेन तत्तुल्यं मनुराह प्रजापतिः॥

317. कृ०क०ल० (III), p. 215 [also 1 प्रकृत्या; 2 समश्नुते].

318. कृ०क०ल० (III), p. 192 [1 गुणवत्]; गृ०र०च०, p. 293; छ०गो० श्रादत्त, p. 55 [om. upto ब्राह्मणस्य]; वी०मि०मि०मि० (आह्निक), p. 452 [2 शूद्रायानृशंस्वार्थमानिथ्यं यथावत्].

319. कृ०क०ल०, (IV), p. 180.

320. ब्रा०सर्व०हला०, fol. 87.

321. कृ०क०ल० (II), p. 166 [1 मदर्त्विजम्]; गृ०र०च०, p. 132.

322. आ०र०ल०, p. 103.

323. शङ्खः उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य वै करौ।
आचम्यार्द्राननो[1]ऽक्रोधः पञ्चार्द्रो भोजनं चरेत्॥

324. शङ्खलिखितौ श्रुतिस्मृतिसमापन्नं देवद्रव्यगुणान्वितम्।
देवतायैयाथाक्लृप्तं[1] प्रोक्षितं शिष्टभोजनम्॥

325. शङ्खः पराशौचे च यो भुङ्क्ते कृमियोनौ प्रजायते।
भुक्त्वान्नं म्रियते यस्य तस्य जातौ प्रजायते॥

326. शङ्खः भक्ष्यं भोज्यं तथा पेयं यत्किञ्चित्पच्यते गृहे।
न भोक्तव्यं तत्पितृणामनिवेद्य[1] कदाचन॥

327. शङ्खः आदित्या वसवो रुद्रा ब्रह्मा चैव[1] पितामहः।
मण्डलान्युपजीवन्ति[2] तस्मात्कुर्वीत मण्डलम्॥

328. शङ्खः चतुष्कोणं द्विजाग्रस्य[1] त्रिकोणं क्षत्रियस्य तु।[2]
मण्डलाकृति वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतम्॥[3]

329. शङ्खः अशूद्रान्तु धनं भिक्षेत्सर्वं दद्याच्च भिक्षितम्।

330. शङ्खः पङ्क्तिविदात्मने गेहे भक्ष्यं वाऽभक्ष्यमेव वा।

331. शङ्खः यातुधानाः पिशाचाश्च असुरा राक्षसास्तथा।
हरन्ति रसमन्नस्य मण्डलेन विवर्जितम्॥

---

323. आ०र०ल०, p. 103. [1 °ननात्येवं]; स्मृ०मु०वै०, p. 417.
324. आ०सा०गदा० (II), p. 329 [1 देवतायै]; कृ०क०ल० (III), p. 228.
325. कृ०क०ल० (III), p. 268.
326. या०स्मृ०शू०, I. 249, p. 28; श्रा०कौ०गो०, p. 223 [1 पितृणान्तदनिवेद्य कथञ्चन].
327. प०सं०या० (v.I.1), p. 415; या०स्मृ०बा०, I. 235, p. 516 [1 ब्रह्मेन्द्रार्कदिवाकराः]; वि०पा०मद०, p. 325 [1 ब्रह्माविष्णुस्तथैव च; 2 मण्डलं तूपजीवति]; स्मृ०च०दे० (I), p. 221; स्मृ०मु०वै०, p. 418.
328. गृ०र०च०, p. 310 [1 द्विजातीनां]; पा०गृ०सू० (परि०), p. 448; म०पा०मद० (III), p. 328 [2 च]; शू०शि०शेष०, p. 177 [1 द्विजस्य स्यात्; 3 मतम्]; स्मृ०कौ०मद० fol. 147; स्मृ०च०दे० (I), p. 221; स्मृ०सा०वि०, p. 289 [3 मतम्].
329. स्मृ०च०दे० (I), p. 160.
330. गो०गृ०सू०भ०ना०, p. 764.
331. वि०पा०अन० (III), p. 326.



332. शङ्खः अपूपाः सक्तयो धानास्तक्रं दधि घृतं मधु।[1]
एतत्पण्येषु[2] भोक्तव्यं भाण्डलेपो[3] न चेद्भवेत्॥

333. शङ्खः अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम्।
अस्नेहा अपि गोधूमयवगोरसविक्रियाः॥

334. शङ्खः दधि भक्ष्यं[1] च[2] शुक्तेषु सर्वं च दधिसंभवम्।
[3]ऋजीषपक्कं भक्ष्यं स्यात्सर्पियुक्तमिति स्थितिः॥

335. शङ्खः अपूपाश्च करंभाश्च धनावटकसक्तवः।
शाकं स्निग्धमपूपं च सूपं कृसरमेव च॥
यवागूः पायसं चैव यच्चान्यत्स्नेहसंयुतम्।
सर्वं पर्युषितं भोज्यं शुक्तं चेत्परिवर्जयेत्॥

336. शङ्खलिखितौ विद्विषाणस्य नाश्नीयात् ब्रह्मच्छित्पापकारिणाम्।[1]
श्राद्धसूतगणान्नानि परिभूतानि यानि च॥

337. शङ्खः भीतरुदिताक्रन्दितावक्रुष्टक्षुतपरिभुक्तविस्मितो-न्मतोन्मत्तावधूतराजपुरोहितान्नानि वर्जयेत्।

338. शङ्खलिखितौ न श्राद्धं भुक्त्वा न हत्वा नामन्त्रितः श्राद्धे न व्रती न दीक्षितश्च, [दीक्षितत्वमवभृथेष्टिपर्यन्तं], न देवायतनश्मशानशून्यालयेषु न वृक्षमूले न दिवा न सन्ध्ययोः।

---

332. नि०अ०, p. 233 [1 पयः; 2 एतत्पण्यागतं भोज्यं]; नृ०प्र०दल० (श्रा०सा०), p. 70 [3 सान्द्रलेपो]; प०सं०मा० (v.I.11), p. 383 [3 °लेऽपि]; म०पा०मद० (III), p. 337 [3 मण्डलेपो]; या०स्मृ०अ० I. 167. p. 243; वि०पा०अन० (III), p. 340; स्मृ०च०दे० (III), p. 418; स्मृ०मु०वै०, p. 437.
333. नृ०प्र०दल० (श्रा०सा०), p. 70.
334. आचारेन्दु त्र्य०, p. 294 [2 विकारेषु; 3 ऋचिष]; प०सं०मा० (v.I.11), p. 384; पा०गृ०सू०(परि०) p. 471 & p. 525 [3 ऋचिस °]; स्मृ०मु०वै० p. 437; स्मृ०र०वे०, p. 172. [1 भक्तं].
335. स्मृ०मु०वै०, p. 437.
336. कृ०क०ल० (III), p. 267 [1 also ब्राह्मविधाय °]; गृ०र०च०, p. 344 [1 °कर्मणाम्]; वी०मि०मि०मि० (आह्निक), p. 504.
337. गृ०र०च०, p. 343; सं०म०शं०, p. 46. [reads only राज to वर्जयेत्].
338. आ०सा०गदा० (II), p. 462.

339. शङ्खलिखितौ नापणीयं [1]कृतान्नमश्नीयात्र[2] भुक्तं पर्युषितं चान्यत्र[3] [4]रागषांडवदधिगुड[5]गोधूमयव[6]पिष्टविकारेभ्यः।

340. शङ्खलिखितौ न भोजनार्थी[1] पाकशालां प्रविशेत्। न वृथापाकं पाचयेत्।[2] न वृथापाकमश्नीयात्।

341. शङ्खः कलिङ्गं च पटोलं च वृन्ताकं सन्धितानि च।
उपोदकी रक्तशाकमेतान्वै वर्जयेद्विजः॥

342. शङ्खः सुरालशुनपलाण्डु[1]गृञ्जनकमांसादीन्यभक्ष्याणि[2] च वर्जयेदाहारमयं हि[3] शरीरं तन्मयत्वात् ब्राह्मणः[4] संकीर्यते। मातुरशितपीतादिभिर्गर्भः संभवति।

---

339. आचारेन्दु त्र्य०, p. 295 [न पापीयसोऽन्नमश्नु°; 2 न हि पक्कं न शुक्तं; 3 om. च 5 तक्र- (for दधि); 6 om. पिष्ट]; & p. 336 [only नापणीयान्नमद्यात्]; आ०र०ल०, p. 107 [as आचारेन्दु, p. 295 ]; आ०सा०गदा० (II), p. 421 [begins from न पर्युषितमन्यत्ररागांशुकआडवदधि ..... भ्यः]; कृ०क०ल० (III), p. 289 [1 om. कृत: 2 न द्विः पक्वं न शुक्तं न पर्यु °; 3 om. च; 4 रागचुक्रषाडवदधिगुडदधिगोधु °]; गृ०र०च०, p. 364 [1 om. कृत; 2 न द्विः पक्वं न भुक्तं न पर्यु °; 3 & 4 as कृ०क०ल०]; म०स्मृ०कु० V. 129, p. 220 [नापणनीयमश्नीयात्]; म०स्मृ०मे० V.128, p. 146 [आपणीयान्यभक्ष्याणि]; या०स्मृ०अ० I.167, p. 243 [1 °यमन्त्रमश्नीयात्। न द्विः पक्वं न पर्यु °; 3 om. च; 4 रागचरुषाडवदधिगुडगोधू°]; या०स्मृ०बा० I. 175 p. 440; या०स्मृ०मि० I. 168, p. 47 [न पापीयसोऽन्नमश्नीयात्। न द्विः पक्वं न शुक्तं न पर्युषितमन्यत्र; 5 adds चुक्र before दधि]; या०स्मृ०नी०मि०, I. 169, p. 244 [begins from न द्विः पक्वं न; as या०स्मृ०मि०]; वी०मि०मि०मि० (आह्निक), p. 521 [as कृ०क०ल०]; स्मृ०च०हे० (III), p. 419 [reads from न पर्युषितमन्यत्रदधिगुडगोधू°]; स्मृ०र०वें०, p. 171 [as या०स्मृ०मि० with v.l. वक्र (for चुक्र-).].

34०. कृ०क०ल० (III), p. 244 [1 °नार्थं; 2 पचेत्]; गृ०र०च०, p. 327; छ०गो०श्रीदत्त, p. 60 [2 नार्थं; पाकशालां].

341. वि०पा०अन० (III), p. 340-341.

342. गौ०ध०सू०म०भा०, p. 369 [1 om. क in गृञ्जनक; 2 om. च; 3 om. हि० 4 वा संकीर्त्यते]; धर्म०ल० (व्य०), p. 1025 [3 om. हि]; म०पा०मद० (IX), p. 824 [2 विवर्जयेत्; 4 संकीर्त्यते]; या०स्मृ०अ० III. 256, p. 1077



एकेन पाणिना दत्तं शूद्रदत्तं न भोजयेत्।
घृतं तैलं च लवणं पानीयं पायसं तथा॥
हस्तदत्ताश्च ये स्नेहलवणव्यञ्जनानि च।
दातारं नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्बिषम्॥

343. शङ्खः भक्ष्याः पञ्चनखाश्चैव गोधाकच्छपशल्यकाः।
खड्गश्च शशकश्चैव तान्भुक्त्वा नाचरेद्व्रतम्॥

344. शङ्खः द्विपक्वान्ननिषेधः स्यात्प्रवादस्मरणाद्यदि।
घृतं वा यदि वा तैलं विप्रैर्नाद्यं नखच्युतम्।
यमस्तदशुचिं प्राह तुल्यं गोमांसभक्षणम्॥

345. शङ्खः उत्पलं च वटं चैव शणशाकं तथैव च।
प्लक्षाश्वत्थोदुम्बराणि श्रेयोर्थी वर्जयेत्सदा॥

346. शङ्खः तित्तिरं च मयूरं च लावकं च कपिञ्जलम्।
वाध्रीणसं वर्तकं च भक्ष्यानाह यमः सदा॥[1]

347. शङ्खः माहिषं त्वाजमौरभ्रं मार्गं रौरवमेव च।
भक्ष्यं मांसं समुद्दिष्टं यच्च वै पार्षतं[1] भवेत्॥
वराहांश्च तथा भक्ष्यानाहारण्यनिवासिनः।

348. शङ्खः गृहाश्वरथभूम्यर्थे गवार्थे च[1] विशेषतः।
श्रोत्रियेणापि[2] भोक्तव्यं शूद्रान्नं[3] तु यमोऽब्रवीत्॥

---

[1 मांसान्य; 2 om. च वर्जयेत्]; या०स्मृ०बा० III. 256, p. 149 & p. 157 [4 संकीर्येत]; वि०र०च०, p. 437 [3 om हि०]; स्मृ०च०दे०, (I), p. 250 [3 om. हि].

343. या०स्मृ०अ०, III.290, p. 1167.

344. स्मृ०च०दे० (III), p. 418.

345. स्मृ०र०वें०, p. 173.

346. कृ०क०ल० (III), p. 303; गृ०र०च०, p. 374 [1 स्वयम्]; पा०गृ०सू० (परि०), p. 528; या०स्मृ०बा०, I. 175, p. 438 [1 स्मृतम्]; वी०मि०मि०मि० (आह्निक), p. 543 [1 स्वयम्]; स्मृ०च०दे० (III), p. 428.

347. स्मृ०च०दे०, (III), p. 429, [1 also प्रोषितं].

348. या०स्मृ०अ०, I.168, p. 244; स्मृ०मु०वै०, p. 446, [1 तु; 2 तु (for [अ]पि]; 3 शूद्राणां].

349. शङ्खः उच्छिष्टलेपसंस्पर्शे प्रक्षाल्यान्येन वारिणा।
भोजनान्ते नरः स्नात्वा गायत्रीं त्रिशतं जपेत्॥

[ भोजनोत्तरं पुराणश्रवणम् ]

350. लिखितः भुक्त्वोपस्थाय मार्तण्डं पुराणानि सदा पठेत्।
भावशुद्ध्या हरौ भक्तिः पुराणश्रवणाद्भवेत्॥

351. शङ्खः विचार्य च पुराणार्थान्वेदार्थान्भक्तिमास्थितः।
विष्णुं सदा हृदि ध्यायेत्सकलं निष्फलं तु वा॥

[ शयनम् ]

352. शङ्खलिखितौ न विशीर्यखट्वायां[1] नान्यवर्णोपसेवितायामनभ्युक्ष्य[2] भूतयक्षग्रहायतनेषु[3] न श्मशानवल्मीक[4]महावृक्षच्छायासु[5] न पर्वणि रभसोत्सवे वा।[6]

353. शङ्खः मृतदन्तमये विदुग्धे दर्भपलाशजे
न शयीत नरो धान्ये शयने पञ्चदारुजे॥

354. शङ्खलिखितौ त्रयाणामपि[1] वर्णानां पूर्वरात्रे प्रजागरः।[2]

---

349. आचारेन्दु त्र्य०, p. 332.

350. स्मृ०मु०वै०, p. 454; स्मृ०र०वें०, p. 203.

351. स्मृ०मु०वै०, p. 454; स्मृ०र०वें०, p. 203.

352. आचारेन्दु त्र्य०, p. 353 [न शीर्णायां स्वद्वायां ना ..... भ्युक्ष्य; om. further]; आ०र०ल०, p. 117 [1 दीर्णायां; 2 om. वर्णोप-; 3 न भूतग्रहायतने न श्मशानवृक्षच्छायासु; 6 च (for वा).]; (second time on the same page) [om. न; om. नान्यवर्णोपसेवितायाम्; 3 न भूत °; 4 om. वाल्मीकमहा-; सु शयीतः; om. न पर्वणि to वा]; आ०सा०गदा० (II), p. 446 [1 विशीर्ण-; 3 न भूत °; 4 om. वल्मीकमहा-]; कृ०क०ल० (III), p. 337. [1 विशीर्ण; 3 न भूत °; 4 om. वल्मीकमहा-]; गृ०र०च०, p. 399; वी०मि०मि०मि० (आह्निक), p. 557 [as कृ०क०ल० & 5 शाखासु]; शू०शि०शेष०, p. 187 [1 विशिर्णायां स्वद्वायां वा; °भ्युक्ष्य च; om. भूत ..... सो वा].

353. आचारेन्दु त्र्य०, p. 353.

354. कृ०क०ल०, (II), p. 278-279 [1 च (for [अ] पि); 2 जागरणम्]; & कृ०क०ल० (III), p. 335, [also पूर्वरात्रेषु जागरः]; च०चि०हे० (परि०), p. 691 [1 om. अपि; 2 जागरणम्]; या०स्मृ०वा०, I. 114, p. 361; वी०मि०मि०मि० (आह्निक), p. 555.



# शुद्धिप्रकरणम्

[ स्वभावशुद्धानि ]

355. शङ्खः पर्षदानुमतस्सम्यगेनो विख्याप्य तत्त्वतः।
यद्ब्रूयुस्तद्विधानज्ञास्तच्छुद्धिकरमुत्तमम्॥

356. शङ्खलिखितौ शुद्धं नदीगतं तोयं सर्व एव तथाकराः।
शुद्धं प्रसारितं पण्यं शुद्धमश्वो जयोन्मुखः॥
मुखवर्जं[1] च गौः शुद्धं [2]मार्जारः क्रमणे शुचिः॥

357. शङ्खः परतः परतः शुद्धिरघवृद्धौ विधीयते।
स्याच्चेत्पञ्चतमादह्नः पूर्वेणैव विशुद्ध्यति॥

358. शङ्खः गोपुरीषश्च मूत्रं च नित्यं मेध्यमिति स्थितिः।

359. शङ्खलिखितौ मृदद्भिः संहतानाम्। द्रव्याणामुत्पवनम्। शुष्काणामुद्धृतदोषाणां संस्कारः परिप्लावितानां दोषाणां त्यागः॥

360. शङ्खलिखितौ [1]आपो रूपरसगन्धवत्यः परिशुद्धाः जीर्णचर्म-[2]करण्डैरभ्युद्धृता भूमिगता मेध्या यत्र गोर्वितृष्णा भवेत्।

---

355. गौ०ध०सू०, p. 417.

356. कृ०क०ल० (X), p. 173 [2 राजा यश्वक्रमे शुचिः]; कृ०स०अ०, p. 183 [om. l.1-2]; प०सं०मा० (v.I.11), p. 190 [om. l.1-2; 2 °रश्वक्रमे]; शु०कौ०गो०, p. 358 [om.l.2; 1 तु (for च).]; शु०वि०रु०, p. 72 [om. l.2; मुखवर्ज्या].

357. शु०कौ०गो०, p. 40.

358. शु०कौ०गो०, p. 359.

359. कृ०क०ल० (X), p. 165, शु०र०च० fol. 90 [मृद्भिः अद्भिः, adds ततस् before त्यागः].

360. कृ०क०ल० (X), p. 159; शु०र०च० fol. 108 [1 आपोह्; 2 कारण्डकैः]; शु०वि०रु०, p. 65[ reads upto अभ्युहता].

361. शङ्खः नारीणां चैव वत्सानां शकुनीनां शुनां[1] मुखम्।
रतौ प्रस्रवणे वृक्षे मृगयायां सदा[2] शुचि॥

362. शङ्खः आकराः शुचयः सर्वे शकुनिः फलपातने।
श्वामृगग्रहणे मेध्यः स्त्रीमुखेषु च वारुणी॥

363. शङ्खः कृष्णशकुनिमुखा[1]वसृष्टं निर्लिखेच्छ्वा[2]पदमुखावसृष्टं पात्रं न प्रयुञ्जीत।

364. शङ्खः घृतदधिपयस्तक्राणामाकरभाणुस्थितानामदोषः।

365. शङ्खलिखितौ बालस्त्रीपरिगतान्यगारेषु दुष्यन्ति धूमाग्निरजांसि वाटवीरितानि विप्रुषः छाया मक्षिका इति स्पर्शे मेध्याः।

[ शरीरशुद्धिः ]

366. शङ्खलिखितौ आप्तायोजिनां शरीरस्याद्भिर्मृद्भिश्च ज्ञानेन बुद्धेस्तपसा पापात्मनाम्। सन्तानजातानां मातृपैतृकाणां दोषाणां यमनियममन्त्रव्रतोपवासादिना शुद्धिः।

367. शङ्खः शक्तिश्च शरीरं शोषयेद्यमनियममन्त्रव्रतादिभिः।

---

361. कृ०क०ल० (X), p. 170 [2 तथा (for सदा).; नि०अ०, p. 232; नृ०प्र०दल०, p. 91; म०पा०मद०, p. 469 [1 शुनो]; या०स्मृ०अ०, p. 264; स्मृ०सा०वि०, p. 250.

362. नि०अ०, p. 234; नृ०प्र०दल०, p. 91.

363. कृ०र०ख० fol. 99 [1 [अ] वकृष्टं]; नि०अ०, p. 224 [2 °श्वापद-]; म०पा०मद०, p. 446; स्मृ०सा०वि, p.243 [1 [अ]वधृष्टं; 2 °श्वापद-; 3 om. पात्रं]

364. आ०र०ल०, p. 107 [om. दोषः]; प०सं०प्रा० (v.I.11), p. 145 [1 अपवरक (sic) (for आकर).]; प्रा०म०नी०, p. 63; प्रा०वि०श्०, p. 329.

365. As Quoted in 'शङ्खलिखितन्धर्मसूत्र' : 169 by Dr. Kane.

366. कृ०क०ल० (X), p. 119; शु०र०च०, fol. 95 [om. from सन्तान °to शुद्धिः].

367. गौ०ध०सू०, p. 417.



## द्रव्यशुद्धिः

### [ पात्राणां शुद्धिः ]

368. शङ्खः मलसंयोगजं तज्जं यस्य येनोपहन्यते।
तस्य तच्छोधनं[1] प्रोक्तं सामान्यं द्रव्यशुद्धिकृत्॥[2]

369. शङ्खः उष्णोदकेन कांस्यस्य[1] सीसस्य त्रपुणस्तथा।
क्षारेण शुद्धिः[2] कांस्यस्य लोहस्य च विनिर्दिशेत्॥

370. शङ्खः लोहानां दाहनाच्छुद्धिर्भस्मना गोमयेन वा।[3]
दहनात्खननाद्वापि शैलानामम्भसापि वा॥
काष्ठानां तक्षणाच्छुद्धिर्मृद्गोमयजलैरपि॥

371. शङ्खः गण्डूषं पादशोधं च यः कुर्यात्कांस्यभाजने।
भूमौ निक्षिप्य षण्मासं पुनराकरमादिशेत्॥

372. शङ्खः सूतिकोच्छिष्टभाण्डस्य सुरामद्यहतस्य[1] च।
त्रिः [2]सप्तमार्जनाच्छुद्धिर्न[3] तु कांसस्य तापनम्॥[4]

373. शङ्खव्यासौ सूतकादि परिच्छेदो दिनमासाब्दपास्तथा।
मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्तिताः॥

---

368. कृ०क०ल०, (V), p. 148 [2 तत्र (for द्रव्य)]; म०पा०मद०, p. 451; या०स्मृ०अ० I. 183, p. 256 [1 शोषणं]; या स्मृ०शू०, I. 191, p. 23; शु०र०च०, fol. 90.

369. कृ०स०अ०, p. 179, [reads only l.1-2; 1 ताम्रस्य शीशस्य; 2 शुद्धिः]; या०स्मृ०अ०, I.183, p. 255; स्मृ०सा०वि०, p. 243 [om l.1-2; 3 च (for वा).].

370. स्मृ०सा०वि०, p. 243.

371. का०सा०गदा०, I. p. 290.

372. कृ०स०अ०, p. 179-180 [3 मार्जनैः; 4 मार्जने]; कृ०र०ख० fol. 129; म०पा०मद०, p. 448; या०स्मृ०अ० I. 183, p. 254 [1 °मध्ये; 4 तापनात्]; या०स्मृ०वि०मि०मि०मि० I.190, p. 263 [as कृ०स०]शु०म०नी०, p. 2 [2 संमर्जनान् (submetric)]; शु०वि०रु०, p. 55 [as कृ०स०].

373. आ०र०ल०, p. 20.

374. शङ्खः च्युतेष्वासावविद्याद्यान्निगिरन्नेव तच्छुचिः।

375. शङ्खः तैजसानां [1]कुणपरेतोमूत्रपुरीषोपहतानामावर्तनमुल्लेखनं भस्माना वा[2] त्रिः सप्तकृत्वः[3] परिमार्जनम्।

[ यज्ञपात्रादीनां शुद्धिः ]

376. शङ्खलिखितौ चमसानामद्भिर्यज्ञसामवायिकशौचम्। अध्वरेषु चमसवद्यतिपात्राणाम्। यतिसमयमाम्नायतः सोदकानां परिघर्षणम्।

377. शङ्खः पर्णानां प्रक्षालनमेव[1] सकृदुपयुक्तकानामुत्सर्गः।[2] पुष्पमूलफलानां[3] च विष्किरावधूतानां प्रोक्षणम्। अभ्युक्षणमित्येके।

[ मृण्मयपात्रादीनां शुद्धिः ]

378. शङ्खः मद्यैर्मूत्रपुरीषैश्च श्लेषापूयाश्रुशोणितैः।
संस्पृष्टं नैव शुद्धयेत्तु पुनः पाकेन शुध्यति॥[1]
एतैरेव च[2] संस्पृष्टं ताम्रसौवर्णराजतम्।
अत्यन्तोपहतानां च परित्यागो विधीयते॥

---

374. शु०कौ०गौ०, p. 305 [1 also ° [अ]पि (for च)]; शु०वि०रु०, p. 54.

375. कृ०क०ल०, (X), p. 149 [1 om. कुणप; 2 om. त्रिः]; म०स्मृ०मे०, p. 439 [adds रुधिर after कुणप]; या०स्मृ०वि०, p. 130; शु०र०च० fol. 99 [om. वा; 3 कृच्छ्रः].

376. कृ०क०ल० (X), p. 143.

377. कृ०क०ल० (X), p. 143; कृ०र०ख० fol.131 [om. upto उत्सर्गः; 3 om. मूल]; नि०अ०, p. 229 [transt. first and second sentences, 1 om. एव; 2 दुष्प्रयुक्तानाम्; 3 om. मूल–; 4 प्रक्षालनमित्येके]; म०पा०मद० (v.I), p. 457 [transt.first and second sentences, 1 om. एव; 3 om.–; 4 प्रक्षालनम् (for प्रोक्षणम्).]; शु०र०च०, fol. 88 [4 adds च before प्रोक्षणम्].

378. कृ०क०ल० (X). p. 150; शु०वि०रु०, p. 60. [1 मृण्मयं (for शुध्यति); 2 तथा स्पृष्टं (for च संस्पृष्टं); reads for l.4 शुध्यसावर्तितं पश्चादन्यथा केवलाम्भसा].



[ शुचिद्रव्याणि ]

379. शङ्खः सर्वेषामापो[1] मृदरिष्टकाङ्गुदबिल्व[2]पत्रतण्डुलसर्षप-कल्कक्षार[3]गोमूत्रगोमयादीनि शौचद्रव्याणि। [4]अहतानां प्रोक्षणमित्येके।

380. शङ्खः रागद्रव्याणि प्रोक्षितानि शुचीनि।

381. शङ्खः ब्रह्मक्षत्रविशां चैव सकृत्संमार्जनाच्छुचिः।
चतुर्थेन तु यद्भुक्तं चतुर्भिर्यत्र[1] मार्जनम्॥
अग्नौ प्रक्षिप्य गृह्णीयाद्धस्तौ प्रक्षाल्य यत्नतः।
गोशृङ्गेण तु संस्पृष्टं तत्पात्रं शुचितामियात्॥

[ रजस्वलास्पर्शे शुद्धिः ]

382. शङ्खः रजस्वलास्पृष्टानामेकदिनं पञ्चगव्यं प्रक्षिप्य एकविंशतिकृत्वः संमार्जनाच्छुद्धिः।

[ उदकशुद्धिः ]

383. शङ्खः कूपे तु पतितौ दृष्ट्वा श्वशृगालौ च मर्कटम्।
अस्थिचर्मादिपतनं पीत्वा शुद्धयेत्त्रिरात्रतः॥

384. शङ्खलिखितौ भूमिष्ठमुदकं शुद्धं[1] शुचि तोयं शिलागतम्।
गन्धवर्णरसैर्दुष्टैर्वर्जितं यदि तद्भवेत्॥[2]

---

379. कृ०क०ल० (X). p. 147; गौ०ध०सू०, p. 17. [1 om. upto मापो; 2 om. पत्रतण्डुल; 3 om क्षार; 4 om. from अहतानां onwards]; नि०अ०, p. 232 [only अहतानां प्रोक्षणम्]; म०पा०मद०, p. 455 [as नि०अ०]; या०स्मृ०अ०, I.183, p. 258.

380. आ०सा०गदा०, p. 85; या०स्मृ०मि० (I), p. 53; स्मृ०मु०वै०, p. 470; स्मृ०र०वें०, p. 147.

381. कृ०र०ख०, fol. 128 [1 तत्र (for यत्र).]; नि०अ०, p. 225; मृ०पा०मद० (VI), p. 448; स्मृ०सा०वि०, p. 243 [1 as कृ०र०]; शु०वि०रु०, p. 55 [1 अथ (for यत्र).].

382. स्मृ०र०वें०, p. 151.

383. स्मृ०र०वें०, p. 151.

384. कृ०क०ल० (X). p. 157 [1 शुध्येत्]; नृ०प्र०दल०, p. 69; प्रा०प्र०भ०, p. 122; शु०कौ०गौ०, p. 297 [2 तद्रदेव]; & p. 341 तथा यच्च (for शुचि तोयं).].

385. शङ्खः चक्राङ्कितः सदा तिष्ठेन्मद्भक्तः सर्वदा शुचिः।

[ देशशुद्धिः ]

386. शङ्खलिखितौ कर्षणमुपलेपनमद्भिरभ्युक्षणं कालो दाहश्च भूमेः( शुद्धिः )।

387. शङ्खः शयनासनयानानां[1] संहतवच्छौचम्।[2]

388. शङ्खः आत्मशय्यासनं वक्त्रं जायापत्यकमण्डलुः।
शुचीन्यात्मन एतानि परेषामशुचीनि तु॥

[ चेलादिशुद्धिः ]

389. शङ्खः चाण्डालेन सहाध्वगमने सचैलस्नानम्।

390. शङ्खलिखितौ द्रव्यहस्त उच्छिष्टो निधायाचामेत्। [1]अद्भिरभ्युक्ष्य द्रव्यं शुध्यति।

391. शङ्खः मृद्भस्मगोमूत्रक्षारोदकश्चैलानां[1] चेलवद्धान्यानां [2]पक्ष्मचामरचर्मतृणवालयेत्र[3]वल्कलादीनाम्।

---

385. आ०र०ल०, p. 36.

386. चि०चि०हे० (III.1), p. 822.

387. कृ०क०ल० (X), p. 143 [1 यानशय्यासनानां]; नि०अ० p. 232; मृ०पा०मद० (I), p. 455; या०स्मृ०अ०, p. 260; शु०र०च० fol. 88. [1 as कृ०क०; 2 वक्रैवं (for वाच्छौचम्).].

388. शु०र०च०, fol. 88.

389. शु०कौ०गो०, p. 326.

390. कृ०क०ल० (I), p. 144 [1° चम्याभ्युक्षंद्रव्यं]; गृ०र०च०, p. 170 [उच्छिष्टं स्पृष्ट्वा निधायाभ्युक्ष्य द्रव्यं]; प्रा०म०नी०, p. 102 [1 °याभ्युक्षंद्रव्यं]; वी०मि०मि०मि०, p. 118 [as कृ०क०]; या०स्मृ०वि० (I), p. 134; स्मृ०च०दे०, (I), p. 103 [1 [आ] चम्य अभ्युपेक्ष्य तद्द्रव्यं]; स्मृ०मु०वै०, p. 240 [as कृ०क०].

391. या०स्मृ०अ०, p. 262 [reads चैलानां in the beginning and om. from the proper place; 2 पक्ष-(for पक्ष्म-); 3 transp.-यंत्र-and-वल्क-]; या०स्मृ०वि० (I), p. 136; शु०र०च० fol. 90 [as या०स्मृ०अ०].



392. शङ्खः चेलानामुत्सेधनं तस्मादुच्छेदनं वा।

[ चर्मशुद्धिः ]

393. शङ्खः त्रिदिनं भस्ममृद्वारि त्र्यहं त्रिफलमेव च।
सप्ताहं सप्तकाषायैश्चर्मशुद्धिः परा स्मृता॥

[ प्रोक्षणेन शुद्धिः ]

394. शङ्खः कारुहस्तः शुचिस्तथाकराः। तद्द्रव्याणि प्रोक्षिता-भ्युक्षितानि[1] शुचीनि।

395. शङ्खः निर्यासानां गुडानां च लवणानां तथैव च।
[1]कुसुम्भकुङ्कुमानां च [2]ऊर्णाकार्पासयोस्तथा॥
[3]प्रोक्षणात्कथिता शुद्धिरित्याह भगवान्यमः।

[ स्नेहादीनां शुद्धिः ]

396. शङ्खलिखितौ आकरजानामभ्यवहरणीयानां[1] घृतेनाभिघारितानां[2] शुद्धिः।[3] पुनः पचनमेव[4] स्नेहानां स्नेहवद्रसानाम्।[5]

---

392 कृ०क०ल० (X), p. 149; शु०श्र०च० fol. 99) या०स्मृ०वि० (I) 127 [उत्स्वेदन प्रक्षालनं तन्मात्रच्छेदो वा].

393. नि०अ०, p. 236.

394. म०स्मृ०मे० (v) p. 128; या०स्मृ०अ०, p. 263 [1 प्रोक्षितानि; om. further]; या०स्मृ०वि० (I) p. 129.

395. कृ०क०ल०, (X), p. 136 [om. 1.3]; नि०अ०, p. 228 [3 शोषात्तु]; नृ०प्र०द०ल०, p. 82 [3 विशेषात्]; प०सं०मा०, p. 185 [om.1.1, 2 और्ण-]; म०पा०मद०, p. 461 [3 शेषेषु]; शु०कौ०गो०, p. 310 [1.3 as मूलानां कुसुमानां च (for the prior half).].

396. कृ०क०ल० (X), p. 165; या०स्मृ०मि०, p. 55 [om. आकारजानाम्; 1 °हार्याणां; 3 om. शुद्धिः; 4 एव]; या०स्मृ०वि० (I), p. 129, [5 द्रवाणाम्]; या०स्मृ०वी०मि०, p. 264 [om. आकारजानाम्; 2 घृताभिघारितानां]; शू०र०च० fol. 90 [2 [अ]द्भिप्लावितानां]; स्मृ०मु०वै०, p. 468 [om. आकारजानाम्; 1 °हार्याणां; 4 एवं, adds प्रस्थाधिकानां before स्नेहानां; 5 स्नेहद्रवरसानां]; स्मृ०र०वें०, p. 148, [as या०स्मृ०मि०].

### [ अशुद्ध्यपवादः ]

397. शङ्खः आधारदोषे तु नयेत् पात्रात्पात्रान्तरं द्रव्यम्।

398. शङ्खः घृतं तु[1] पायसं क्षीरं तथैवेक्षुरसो गुडः।
शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति॥

399. शङ्खः आभीरभाण्डसंस्थानि पयोदधिघृतानि च।
तावत्पूतं हि तद्भाण्डं यावत्तत्तत्र तिष्ठति॥

400. शङ्खः श्रपणं घृततैलानां प्लावनं गोरसस्य तु।[1]
भाण्डानि प्लावयेदद्भिः[2] शाकमूलफलानि च॥

401. शङ्खः रथ्याकर्दमतोयेन[1] ष्ठीवनाद्येन वा[2] तथा।[3]
नाभिरूर्ध्वं नरः स्पृष्टः सद्यः स्नानेन शुध्यति॥

402. शङ्खलिखितौ स चेत्प्रत्यापन्नः शुद्धिमन्विच्छेत्तमेव जनमाहूय राजानं अभिभाष्य गुणानुकीर्तनं कृत्वा शोद्धिकं दधिमधुघृतजलाक्षतानां नवं पात्रं पूरयित्वा गन्धमाल्योपनीतं कृत्वा त्रिः प्रदक्षिणीकुर्युः। बान्धवाः योषितश्च ततो महाव्याहृतिहोमान्ते तत्पात्रम् अपां मध्ये प्रवाहयेरन्। शान्तान्यशुभानि दुर्भाषितानीति

---

397. प०सं०मा०, p. 145.

398. कृ०स०अ०, p. 180; गौ०ध०सू० (परि०), p. 69; प०सं०मा०, p. 145; म०पा०मद०, p. 460, [1 च (for तु).].

399. वि०पा०अन०, p. 340-341.

400. नि०अ०, p. 228 [1 च (for तु).]; म०पा०मद०, p. 459 [as नि०अ०]; या०स्मृ०अ०, p. 269; शु०म०नी०, p. 2 [1 as नि०अ०; 2 क्षालयेद्]; स्मृ०सा०नृ०, fol. 56.

401. आ०र०ल०, p. 57 [2 पुनः]; आ०सा०गदा०, p. 242 [1.1 पावनाधेन वाप्यथ (for the post half). कृ०क०ल० (X), p. 122 [2 पुनः]; प०सं०मा०, p. 187 [2 त्वथ]; प्रा०वि०शू०, p. 483 [2 पुनः]; या०स्मृ०अ०, p. 281 [2 त्वथ]; & p. 925 [1 तोयेपु]; या०स्मृ०मि०, p. 188; या०स्मृ०वी०मि०मि०मि०, p. 273 [2 [अ]प्यथ]; वी०मि०मि०मि०, p. 213; शु०वि०रु०, p. 53-54. [2 पुनः]; स्मृ०च०दे०, p. 119; स्मृ०मु०वै०, p. 268.

402. कृ०क०ल० (II), p. 425.



ब्रुवन्तः। ततः स्नात्वा शुचिः शुक्लवासाः पुनर्गृहं प्रविशेत्। बान्धवाऽनुमतः स्त्रीणामप्येवं परित्यागो दुष्टानां पुनरावाहनं च।

403. शङ्खलिखितौ एकव्रतस्कन्नभावत्वात् परेन्द्रियोपहतत्वाच्च दुष्टाः कुलसङ्करकरिण्यो भवन्ति।

404. शङ्खः सिद्धमन्नं तथा सर्पिः क्षीरं च दधि चाम्बु च।
एतेषामवलीढानां तेजसा शुद्धिरिष्यते॥
काकमार्जारनकुलसर्पमूषकपक्षिभिः।
संस्कृतं तु यदा ह्यन्नमवलिह्येत केनचित्॥
सुवर्णवर्णताम्रौल्कैर्गोवालै रजतेन वा।
स्पृष्टमेकतरेणापि भोज्यं घ्रातमजेन वा॥

405. शङ्खः सिद्धार्थानां कल्केन शृङ्गदन्तमयस्य च।
गोवालैः फलपात्राणामस्थ्नां स्याच्छृङ्गवत्तथा॥

---

403. कृ०क०ल० (X), p. 181; शू०वि०रु०, p. 74, [1 om. इन्द्रिय].

404. या०स्मृ०अ०, p. 269.

405. कृ०क०ल० (X), p. 136; प्रा०प्र०भ०, p. 123.

# दानप्रकरणम्

406. शङ्खलिखितौ कृसरपायसापूपमांसदधिमधुघृतकृष्णाजिनानि शूद्रेभ्यो न[1] दद्यान्नोपस्कृतं किञ्चिदन्यत्र प्रकृतात्।

407. बोधायनशङ्खौ ब्राह्मणक्षत्रियविट्शूद्रानभ्यागतान्यथाशक्त्या पूजयेद्यदि बहूनां न शक्नुयादेकस्मै गुणवते[1] दद्याद्यो वा प्रथमागतः स्याच्छ्रोत्रियस्तस्मै दद्यात्।

408. शङ्खलिखितौ धर्मेण वित्तमादाय पितृभ्यो दद्यात्।

409. लिखितयाज्ञवल्क्यौ
स्वर्गलोकमहितत्वकामो वा।

---

406. कृ०क०ल० (II), p. 381 [1 न चोच्छिष्टं हविष्कृतं नोपकृतं किञ्चिदन्या प्रकृतान्]; च०चि०हे० (दान० I), p. 54 [subst. कृसरं पायसं यावं दधिमधुकृष्णाजिनानि शूद्रेभ्यो न दद्यान्नोपाकृतं किञ्चित्]; या०स्मृ०अ०, I. 154, p. 220.

407. आ०र०ल०, p. 102 [3 om. दद्यात्]; स्मृ०च०दे० (I), p. 217 [om. upto पूजयेत्; 1 शीलवते; 2 om. वा].

408. का०सा०गदा०, p. 536; कृ०क०ल० (IV), p. 45.

409. दा०कौ०गो०, p. 46.

# श्राद्धप्रकरणम्

## [ श्राद्धाधिकारिणः ]

410. शङ्खः पितुः पुत्रेण कर्तव्या[1] पिण्डदानोदकक्रिया।
पुत्राभावे[2] तु[3] पत्नी स्यात्पत्न्यभावे[4] तु सोदरः॥[5]

411. शङ्खः भार्यापिण्डं पतिर्दद्या[1]द्भर्त्रे भार्या तथैव च।
श्वश्र्वादेश्च[2] स्नुषा चैव तदभावे सपिण्डकाः॥[3]

412. शङ्खः अपुत्रायाः पतिर्दद्यात्सपुत्राया न तु क्वचित्।
पत्युः पिण्डं तथा भार्या भर्तृभार्ये परस्परम्॥

---

410. कृ०स०अ०, p. 166 [only cd; 5 सहोदरः]; नि०अ०, p. 244 [only cd]; नि०सि०क०, p. 270 & p. 271 [only cd]; प०सं०मा० (I.11), p. 462; म०पा०मद० (V), p. 401; या०स्मृ०अ०, I. 218, p. 431; या०स्मृ०बा० II. 135, p. 224; शु०र०च० fol. 78 [5 सहोदरः]; शु०कौ०गो०, p. 92 [2 तद् (for पुत्र); 3 च (for तु); 5 सहोदरः]; शु०वि०रु०, p. 36 [5 सहोदरः]; श्रा०क०नन्द, p. 8; श्रा०कौ०गो०, p. 456 [as शु०कौ०, p. 92]; श्रा०म०नी०, p. 20; स्मृ०च०दे० (III), p. 335; स्मृ०च०दे०, p. 336 [only c]; स्मृ०न०र०, p. 297 [2 तद् (for पुत्र); 4 तदभावे सहोदरः]; स्मृ०मु०वै०, p. 563 & p. 670 [1 कर्तव्यं पौत्रेणापि सपिण्डनम्; 2 तद् (for पुत्र).]; स्मृ०सा०वि०, p. 197 [2 तद (for पुत्र).]; & p. 198 [reads only cd].

411. कृ०स०अ०, p. 168 [1 पत्युर् (for भर्त्रे).]. नि०अ०, p. 246 [2 तु; 3 तु; सोदरः]; नि०सि०क०, p. 271; म०पा०मद०, p. 403 [2 तु; 3 तु सोदरः]; या०स्मृ०बा० III, 16, p. 42 & p. 43 [only cd]; II. 135, p. 224 [as म०पा०]; शु०कौ०गो०, p. 95 [1 कुर्यात् (for दद्यात्).; 3 द्विजोत्तमः]; शु०र०च० fol. 78 [1 पत्ये (for भर्त्रे).]; शु०वि०रु०, p. 36 [1 पत्ये (for भर्त्रे).]; श्रा०क०नन्द०, p. 9 [3 तु सोदरः]; श्रा०कौ०गौ०, p. 459 [3 द्विजोत्तम]; स्मृ०त०र० (II), p. 390 [om. 1-cd]; हा०अ०, p. 175 [2 श्वसुरादे].

412. स्मृ०मु०बै०, p. 670.

413. शङ्खः अपुत्रायाः पत्न्याः दुहितृसपत्नीपुत्रयोरभावे पतिर्दद्यात्।
न जायाया पतिर्दद्यादपुत्राया अपि क्वचित्॥

414. शङ्खः अविभक्ता विभक्ता वा कुर्युः श्राद्धमदैवतम्।
मघासु च ततोऽन्यत्र नाधिकारः पृथग्विना॥

415. शङ्खः यद्येकजाता बहवः पृथग्क्षेत्राः पृथग्जनाः।[1]
एकपिण्डाः पृथक्छौचाः पिण्डस्त्वावर्तते त्रिषु॥

416. शङ्खलिखितवसिष्ठहारिताः
लोकानन्त्यं दिवः प्राप्तिः[1] पुत्रपौत्रप्रपौत्रकैः।
पुत्रादीनां मुख्यत्वात्तदभावे वृद्धानाथास्तथा स्त्रियः॥
तत्सपिण्डा बान्धवा वा ये तस्याः परिपन्थिनः।
हिंस्युर्धनानि तान्राजा चौरदण्डेन शासयेत्॥

[ श्राद्धकालाः ]

417. शङ्खः यदा विष्टिर्व्यतीपातो भानुवारस्तथैव[1] च।
पद्मकं नाम तत्प्रोक्तमयनाच्च[2] चतुर्गुणम्।

418. शङ्खः श्रावणाश्वी धनिष्ठार्द्रा नागदैवतमस्तके।
यदामा[1] रविवारेण व्यतीपातः स उच्यते॥

---

413. हा०अ०, p. 175.
414. शु०कौ०गो०, p. 89; श्रा०कौ०गो०, p. 280 & p. 453.
415. कृ०क०ल० (iv), p. 263 [1 धनाः]; कृ०क०ल० (X), p. 28 [1 गृहाः]; नि०सि०क०, p. 206; प०सं०मा०, (v.I.11), p. 61, [1 धनाः]; म०पा०मद० (II), p. 140; मृ०स्मृ०वै०, p. 413; या०स्मृ०मि०, I.53, p. 14; या०स्मृ०वि० I.53, p. 63; शू०र०च० fol. 76; शू०शि०शेष०, p. 198; स्मृ०कौ०मद० fol. 62; स्मृ०मु०वै०, p. 128; हा०अ०, p. 99 [1 धनाः].
416. नि०सि०क०, p. 270 [reads only 1.1]; वि०तां०क०, p. 384.
417. च०चि०हे०, p. 507 & p. 679 [1 °रेण संयुतः]; पु०चि०वि०, p. 536 [1 °रेण संयुतः]; श्रा०म०नी०, p. 6 [2 तु (for च).]; श्रा०म०बा०, p. 136; स्मृ०च०दे० (III), p. 341 [2 अयनाय]; स्मृ०मु०वै०, p. 760.
418. स०म०नी०, p. 68 [1 अमा चेद्]; स्मृ०च०दे०, (III), p. 341.



419. शङ्खः हस्तिच्छायासु यद्दत्तं यद्दत्तं राहुदर्शने।
विषुवत्ययने चैव सर्वमानन्त्यमुच्यते॥[1]

420. शङ्खः फलं लक्षं समुत्पत्तौ भ्रमणे कोटिरुच्यते।
पतने शतकोट्यस्तु पाते वै दत्तमक्षयम्॥

421. शङ्खः प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम्।
प्राप्य श्राद्धं हि[1] कर्तव्यं मधुना पायसेन च॥[2]

422. शङ्खः पूर्वाह्णे दैविकं कृत्यमपराह्णे पितृक्रिया।
ग्रहणे निशि वा कार्या न रात्रौ पैतृकं पुनः॥

423. शङ्खः शुक्लपक्षे हि चन्द्रस्य वृद्धिर्भवति भास्करात्।
कृष्णपक्षे क्षयस्ताभ्यां तिथीनामपि तौ खलु॥

424. शङ्खः मुहूर्तत्रितयं प्रातस्तावानेव तु संगवः।
मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णश्च तादृशः॥
सायाह्नस्त्रिमुहूर्तः स्यात्सर्वकर्मसु गर्हितः॥

425. शङ्खः रौद्रश्चैत्रस्तथा[1] मैत्रस्तथा शालकटः स्मृतः।
सावित्रश्च[2] जयन्तश्च गान्धर्वः[3] कुतपस्तथा॥

---

419. च०चि०हे०, p. 501; स्मृ०च०दे०, (III), p. 341; स्मृ०मु०वै०, p. 760 [1 अश्नुते (for उच्यते).].
420. नि०सि०क०, p. 269.
421. का०सा०गदा०, p. 461; कृ०क०ल० (IV), p. 20; कृ०र.च०, p. 317; नि०सि०क०, p. 117 [2 तु]; प०सं०मा० (v.I.11), p. 326 [1 तु]; पा०गृ०सू०, p. 426 [2 तु]; म०स्मृ०कु० III. 274., p. 140; व०कौ०गो०, p. 356 [1 तु]; वी०मि०मि०मि०, p. 171; श्रा०कौ०गो०, p. 271; श्रा०वि०रु०, p. 32; स्मृ०कौ०अ०, p. 188 [1 तु; 2 वा]; स्मृ०च०दे०, p. 368 [1 न]; स्मृ०त०र०, p. 117 & p. 257; स्मृ०मु०वै०, p. 749 [1 तु]; स्मृ०र०के० fol. 123 [2 तु].
422. स्मृ०मु०वै०, p. 709.
423. नि०अ०, p. 23.
424. पु०चि०वि०, p. 42.
425. का०सा०गदा०, I. p. 47 [1 च मैत्रश्च (for तथा मैत्रस्); 2 सार्वत्रश्च; 4 भेदाः]; स्मृ०मु०वै०, p. 407; स्मृ०सा०वि०, p. 8 [1 च मैत्रश्च; 3 गान्धारः; 4 भागः].

महेन्द्रो वरुणश्चैव बोधः[4] पञ्चदशः स्मृतः।
रोहिणिश्च विरिंचश्च विजयो नैर्ऋतस्तथा॥[3]

### [ श्राद्धदेशाः ]

426. शङ्खः गोगजाश्वादिपृष्ठेषु[1] कृत्रिमायां तथा भुवि।
न कुर्याच्छ्राद्धमेतेषु पारक्यासु च[2] भूमिषु॥

427. शङ्खः म्लेच्छदेशे तथा रात्रौ सन्ध्यायां च विशेषतः।
न श्राद्धमाचरेत्प्राज्ञो म्लेच्छदेशं न च व्रजेत्॥

428. शङ्खः यद्ददाति गयास्थश्च प्रभासे पुष्करेषु च।
प्रयागे नैमिषारण्ये सर्वमानन्त्यमुच्यते॥

429. शङ्खः गङ्गायमुनयोस्तीरे भृगुतुङ्गे हिमालये।[2]
नर्मदाबाहुदातीरे सर्वमानन्त्यमुच्यते॥[3]

430. शङ्खः करुणां च कुरुक्षेत्रे भृगुतुङ्गे हिमालये।
सप्तर्षे वृष्णिकूपे च दत्तमक्षय्यमुच्यते॥

431. शङ्खलिखितौ कुरुक्षेत्रे गयातीर्थे तथा वामकरण्डके।
एवमादिषु तीर्थेषु दत्तमक्षयतामियात्॥

---

426. चतुः सं०भ०, p. 121 [1 वृक्षेषु; 2 °शुचि]; नि०सि०क०, p. 267 [1 जुष्टेषु]; नृ०प्र०दल०, p. 97; प०सं०मा० (v.I.11), p. 303; या०स्मृ०बा० I. 216, p. 488; श्रा०म०नी०, p. 19 [1 जुष्टेषु; 2 शुचि]; स्मृ०च०दे० (III), p. 385. [om. cd]; स्मृ०मु०वै०, p. 758.

427. कृ०क०ल० (IV), p. 40; नृ०प्र०दल०, p. 101; या०स्मृ०अ०, I.227, p. 472.

428. कृ०क०ल० (IV), p. 31.

429. कृ०क०ल० (IV), p. 32 [2 पयोष्ण्यमरकण्टक]; नि०सि०क०, p. 266-267; नृ०प्र०दल०, p. 98; पृ०सं०मा० (v.I.11), p. 304; म०पा०मद० (vii),p. 485 [1 वाराणस्यां कुरुक्षेत्रे; 3 अश्नुते]; श्रा०क०नन्द, p. 36 [as म०पा०; स्मृ०च०दे० (III), p. 386 [as म०पा० with v.l. तुङ्गशृङ्गे]; स्मृ०मु०वै०, p. 759 [om.1.2]

430. कृ०क०ल०, (IV), p. 32.

431. स्मृ०मु०वै०, p. 47.



432. शङ्खः गङ्गाद्वारे प्रयागे[1] च नैमिषे पुष्करे तथा।
सन्निहत्यां गयायां च दत्तमक्षय्यतां व्रजेत्॥

433. शङ्खः अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः।
गयाशीर्षे वटे श्राद्धं यो नो दद्यात्समाहितः॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।
यजेत वाश्वमेधेन[1] नीलं वा वृषसुत्सृजेत्॥

434. शङ्खः यत्र क्वचन नर्मदातीरे यमुनातीरे गङ्गायां विशेषतो गङ्गाद्वारे प्रयागे गङ्गासागरसङ्गमे कुशावर्ते बिल्वके नीलपर्वते। कुब्जाहे भृगुवृन्दे केदारे लिङ्गायां सुगन्धायां फाल्गुतीर्थे महागङ्गायां तण्डुलिकाश्रमे कुमारधारायां प्रभासे यत्र क्वचन सरस्वत्यां बिशेषतो नैमिषारण्ये वाराणस्यामगस्त्याश्रमे कण्वाश्रमे कौशिक्यां सरयूतीरे शोणायां भागीरथ्याश्च सङ्गमे श्रीपर्वते कल्पोदके उत्तरमानसे वडवायां सप्तर्चे विष्णुपदे स्वर्गप्रदेशे गोदावर्यां गोमत्यां वेत्रवत्यां विपाशायां वितस्तायां मरुद्वधायां शतद्रुति चन्द्रभागायां ऐरावत्यां सिन्धोस्तीरे दक्षिणे पञ्चनदे औजसे चैवमादिष्वन्येषु तीर्थेषु सरिद्वरासु पुष्करेषु प्रस्रवणेषु पर्वतेषु निकुञ्जेषु वनेषूपवनेषु च गोमयेनोपलिप्तेषु मनोज्ञेषु च।

435. शङ्खः स्थलीषु गिरिप्रस्थेषु तीर्थेष्वायतनेषु च।
विविक्तेषु च तृप्यन्ति तृप्यन्तु पितरस्तथा॥

---

432. नि०सि०क०, p. 266-267 [1 वै]; नृ०प्र०दल०, p. 98; प०सं०मा० (VI.11), p. 304; म०पा०मद०, p. 485; श्रा०क०नन्द०, p. 36; स्मृ०च०दे०, (III), p. 386 [1 वै]; स्मृ०मु०वै०, p. 759.

433. नि०सि०क०, p. 267; श्रा०क०नन्द०, p. 36; स्मृ०मु०वै०, p. 759 [1 मेधं वा].

434. स्मृ०मु०वै०, p. 759.

435. स्मृ०च०दे०, (III), p. 385.

436. शङ्खदेवलौ तीर्थद्रव्योपपत्तौ च न कालमवधारयेत्।
पात्रं च ब्राह्मणं प्राप्य सद्यः श्राद्धं समाचरेत्॥

437. शङ्खः पिण्याकैः सक्तुभिर्वापि गयाशीर्षे सकृन्नरः।
यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम्॥

438. शङ्खः शङ्खं[1] प्राहुरमावास्यां क्षीणसोमां द्विजोत्तमम्।
अष्टका[2] च भवेत्पद्मं तत्र दत्तं तथाऽक्षयम्॥

439. शङ्खः न स्रवन्तीमतिक्रामेदनवसिच्य।

440. शङ्खः कुलेऽस्माकं स जन्तुः स्याद्यो नो दद्याज्जलाञ्जलिम्।
नदीषु बहुतोयासु शीतलासु विशेषतः॥
नदीसमुद्रतीरे वा ह्रदे गोष्ठे च पर्वते।
समुद्रगानदीतीरे सिन्धुसागरसङ्गमे।
नद्योर्वा सङ्गमे राजन्शालग्रामशिलान्तिके।
शालग्रामे च गोकर्णे गयायां च विशेषतः॥
क्षेत्रेष्वेषु तु यः श्राद्धं पितृभक्तिसमन्वितः।
करोति विधिवन्मर्त्यः कृतकृत्यो विधीयते॥

441. शङ्खश्च मनुशातातपौ
कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा।
पयोमूलफलैर्वापि पितृभ्यः प्रीतिमावहन्॥

## [ मातृश्राद्धम् ]

442. शङ्खः मातर्यपि च वृत्तायां श्राद्धं कुर्वीत पैतृकम्।
तस्यां न वत्सरं कुर्यात्प्रेते पितरि च क्वचित्॥

---

436. नि०सि०क०, p. 360; वि०पा०अन०, p. 778; सं०र०गो०दी०, p. 1024.
437. श्रा०क० नन्द० p. 36.
438. च०चि०हे०, p. 507 [1 आहुः (for प्राहुः) 2 अष्टकासु]; श्रा०म०नी०, p. 6.
439. नि०सि०क०, p. 359.
440. स्मृ०मु०वै०, p. 759.
441. पी०मि०मि०मि०, p. 432.
442. का०सा०गदा० (I), p. 287.



443. शङ्खः पित्रादित्रयपत्नीनां[1] भोज्या मातृः प्रति द्विजाः।
स्त्रीणामेव तु[2] तस्मात्तु[3] मातृश्राद्धमिहोच्यते॥

## [ आमश्राद्धम् ]

444. शङ्खः आमश्राद्धाशने विद्वान्मासमेकं व्रतं चरेत्।

445. शङ्खः अमाश्राद्धं प्रकुर्वीत पूर्वं दद्यात्तिलोदकम्।
प्रत्याब्दिके तथा मासि श्राद्धे दद्यात्परेऽहनि॥

## [ पार्वणो विधिः ]

446. शङ्खः अमावास्या[1] क्षयो यस्य प्रेतपक्षेऽथवा यदि।[2]
सपिण्डीकरणादूर्ध्वं तस्योक्तः पार्वणो विधिः॥

## [ पार्वणैकोद्दिष्टविधानम् ]

447. शङ्खः पर्वकालो मृताहश्च यद्येकत्र द्वयं भवेत्।
पार्वणं तत्र कर्तव्यं नैकोद्दिष्टं कदाचन॥

448. शङ्खः अन्वष्टका[1] तथा[2] मातृश्राद्धं चैव मृताहनि।[3]
एकोद्दिष्टं तथा भुक्त्वा स्त्रीषु[4] नान्यत्पृथग्भवेत्॥

---

443. श्रा०कौ०मो०, p. 310 [1 °पत्नीषु भोज्याः मातृः 2 तद्यस्मान्]; स्मृ०मु०वै०, p. 718.
444. प्रा०म०नी०, p. 59; प्रा०वि०शू०, p. 318.
445. स्मृ०मु०वै०, p. 382.
446. का०न०वि०रघु० (p. II), p. 440 [2 पुनः]; का०सा०गदा०, p. 497 [1 °स्यां; 2 पुनः subst. for cd पार्वणं तस्य कर्तव्यं नैकोद्दिष्टं कदाचन]; धर्मा० शे०, p. 18 [1 अमायां तु; cd as का०सा०]; नि०अ० p. 173 [1 अमायां वा; cd as का०सा०]; नि०सि०क०, p. 333 [as का०सा०]; प०सं०मा० (v.I.2). p. 446 [as का०सा०]; पा०गृ०सू० (परि०), p. 496 [1 अमायां वा; 2 भवेत्]; पु०चि०वि०, p. 465-466 [as धर्मा०शे०; 2 तथा भवेत्]; या०स्मृ०बा० I. 256, p. 599 [om. ab]; श्रा०कौ०गो०, p. 473 [as का०त०]; स्मृ०ल०र०, p. 256.
447. पु०चि०वि०, p. 465.
448. कृ०म०अ०, p. 29 [4 त्रीषु]; नि०सि०क०, p. 322 [2 गया]; म०पा०मद०

449. शङ्खः श्राद्धद्रव्यमुपक्रम्य कुर्वीत सहपिण्डनम्।
तयोः पार्वणवत्पूर्वमेकोद्दिष्टमथापरम्॥

450. शङ्खः नान्दीमुखे सत्यवसू संकीर्त्यौ वैश्वदेविके।

## [ इष्टिश्राद्धम् ]

451. शङ्खः इष्टिश्राद्धे क्रतुर्दक्षः[1] संकीर्त्यौ वैश्वदेविके।
नान्दीमुखे सत्यवसू काम्ये च धूरिलोचनौ॥[2]
पुरुरवार्द्रवौ चैव पार्वणे समुदाहृतौ।[3]
नैमित्तिके कामकालावेवं [4]सर्वत्र कीर्तयेत्॥

452. शङ्खलिखितौ पिता पितामहश्चैव तथैव प्रपितामहः।
भूयस्तत्रैव जायन्ते तदहर्वेदयन्ति च॥

## [ ब्राह्मणामन्त्रणम् ]

453. शङ्खलिखितौ जन्मशरीरलक्षणगुणोपेतान् ब्राह्मणानामन्त्रयेत्।
श्वोऽद्येति वा श्राद्धमाचरिष्ये।

---

(vii), p. 519. [3 मृतेऽहनि]; वि०पा०अन० (II), p. 806. [as म०पा०]; श्राद्ध०कौ०गो०, p. 270 [2 गया; 3 मातृर्]; & p. 494 [same as p. 270]; स्मृ०च०दे० (III), p. 369 [2 वृद्धौ मातुः श्राद्धमृताहनि].

449. स्मृ०त०र०, p. 9.

450. नि०सि०कं०, p. 348.

451. च०सं०भ०, p. 149 [1 °र्दक्षौ; 2 तु; 4 transp. काम and काल]; नि०सि०क०, p. 156 [reads as क्रतूदक्षावष्टभ्यां कामकालौ]; p. 279 [1 क्रतूर्दक्षौ सत्यौ नान्दीमुखे वसू; reads 1[d] to 2b as in text; om. 2cd]; नृ०प्र०दल०, p. 135 [वैश्वदेविकौ; 2 काम्येषु]; प०सं०मा० (v.I.11), p. 403 [2 धूरि रोचनौ (sec) 4 transp. काम and काल]; या स्मृ०वा० I.228, p. 508; स्मृ०च०रे० (III), p. 443 [1 संकीर्त्यौ; 2 धूरिलोचना; 4 कालकाम्या चैवं]; स्मृ०मु०वै०, p. 664 [om. st. 1; 3 सुरसत्तमौ; 4 कालकामावेवं] & p. 793 [4 कालकाम्यावेवं].

452. च०चि०हे० (III), p. 325-326.

453. कृ०क०ल० (IV), p. 103.



## [ अग्नौकरणम् ]

454. शङ्खः अग्नौकरणशेषेण यदन्नमभिघारयेत्।
तस्मिंस्तु प्राशिते दद्याद्यदन्यत्प्रकृतं भवेत्॥

455. शङ्खलिखितौ अथ पाङ्क्तेया वेदवेदाङ्गवित् पञ्चाग्निरनूचानो ब्रह्मचारी श्रोत्रियस्त्रिणाचिकेतस्त्रिमधुस्त्रिसौपर्णौ ज्येष्ठसामगः सन्ध्यास्नायी वेदपरः सदाग्निको मातृपितृशुश्रूषुर्धर्मशास्त्रविद्।

## [ ब्राह्मणाः पङ्क्तिपावनाः ]

456. शङ्खः षडङ्गवित् त्रिसौपर्णो बह्वृचो ज्येष्ठसामगः।
त्रिणाचिकेताः पञ्चाग्निर्ब्राह्मणाः पङ्क्तिपावनाः॥

457. शङ्खः ब्रह्मदेयानुसन्तानो ब्रह्मदेयाप्रदायकः।
ब्रह्मदेयापतिश्चैव[1] ब्राह्मणाः पङ्क्तिपावनाः॥

458. शङ्खः यजुषां[1] पारगो यश्च साम्नां[2] यश्चापि पारगः।
अथर्वशिरसोऽध्येता ब्राह्मणाः[3] पङ्क्तिपावनाः॥

459. शङ्खः चान्द्रायणव्रतस्थो यः सत्यवादी पुराणवित्।
निवासः सर्वविद्यासु शान्तो विगतकल्मषः॥
गुरुवेदाग्निपूजासु शान्तो विगतकल्मषः॥

---

454. या०स्मृ०अ०, I.239, p. 500.

455. कृ०क०ल०, (IV), p. 68.

456. च०चि०हे० (III.1), p. 399; परा०मा०, (I.2), p. 342.

457. आ०भू०त्र्यं०, p. 378, कृ०क०ल० (IV), p. 66 [1 यश्च (for चैव)]; नृ०प्र०दल०, p. 38; प०सं०मा० (v.I.11), p. 342; पा०गृ०सू० (परि०), p. 535; स्मृ०मु०वै०, p. 966.

458. कृ०क०ल० (IV), p. 66; नृ०प्र०दल०, p. 38, प०सं०मा० (v.I.2), p. 342 [1 ऋग्यजुः]; पा०गृ०सू० (परि०), p. 533 [2 ऋचां साम्नां च पारगः 3 reads 1 in singular]; स्मृ०मु०वै०, p. 766.

459. नृ०प्र०दल०, p. 38.

460. शङ्खः नित्यं योगपरो[1] विद्वान् समलोष्ठाश्मकाञ्चनः।
ध्यानशीलो यतिर्विद्वान् ब्राह्मणाः पङ्क्तिपावनाः।

[ अपाङ्क्तेयाः ]

461. शङ्खलिखितौ अनृतवाक्तस्करो[1] राजद्विष्टो[2] भृत्यो वृक्षरोपकृत्तिर्गरदोऽग्निदो माहिषिकश्छागलिकः[3] शूद्रोपाध्यायो बन्दी घाण्टिको देवलकः पुरोहितो नक्षत्रदेशवृत्तिर्ब्रह्मपुरुषो[4]ऽपत्यविक्रयी कितवः कूटकारकमानुषपशुविक्रयिणश्चेत्यपाङ्क्तेयाः।

462. शङ्खः ब्राह्मणा ये विकर्मस्था बैडालवृत्तिकास्तथा।
हीनाङ्गा चाधिकाङ्गाश्च विज्ञेयाः पङ्क्तिदूषकाः॥

463. शङ्खः कुनखी श्यावदन्तश्च दुश्चर्मा वृषलीपतिः।
कुष्ठी च राजयक्ष्मी च ब्राह्मणाः पङ्क्तिदूषकाः।

464. शङ्खः अनध्यायेष्वधीयानाः शौचाचारविवर्जिताः।
शूद्रान्नरसपुष्टाङ्गा ब्राह्मणाः पङ्क्तिदूषकाः॥

465. शङ्खः गुरूणां प्रतिकूलाश्च वेदाग्न्युत्सादिनश्च ये।
गुरूणां त्यागिनश्चैव ब्राह्मणाः पङ्क्तिदूषकाः॥

---

460. कृ०क०ल०, (IV), p. 66; नृ०प्र०दल०, p. 38 [2 सिद्धः]; प०सं०मा० (v.I. 11), p. 342.

461. कृ०क०ल० (IV), p. 87-88 [1 अनृतवादी; 2 om. द्विष्टो; 3 om from माहिषि upto छागलिकः; 4 पुरुषो मद्यपो ब्रह्मविक्रयी]; या०स्मृ०अ०, I. 222, p. 453.

462. कृ०क०ल० (IV), p. 87.

463. आ०र०ल०, p. 108 [reads कुनखीकुष्ठिसंस्पृष्टम्]; कृ०क०ल० (IV), p. 87.

464. कृ०क०ल० (IV), p. 871; या०स्मृ०अ०, I. 224, p. 448; स्मृ०च०दे० (III), p. 402; स्मृ०मु०वै०, p. 775.

465. कृ०क०ल० (IV) p. 87.



[ श्राद्धं न दातव्यम् ]

466. शङ्खः अङ्गुष्ठमात्रसुषिरौ कर्णौ न भवतो यदि।
तस्मै श्राद्धं न दातव्यं यदीच्छेदासुरं भवेत्॥

[ आसुरश्राद्धम् ]

467. शङ्खः मातामहादेर्ज्ञातींश्च स्वस्य ज्ञातींश्च वर्जयेत्।
गृह्णेत यदि कर्ता च भोक्ता च नरकं व्रजेत्॥
तच्छ्राद्धमासुरं प्रोक्तं पितॄणां नोपतिष्ठते॥

[ पितृस्थाने नियोजनम् ]

468. शङ्खलिखितौ ध्रियमाणे तु पितरि माता चेन्निधनं गता।
पितृस्थाने स्वपितरं तत्स्थानेऽन्यन्नियोजयेत्॥

[ एकब्राह्मणपक्षे दैवव्यवस्था ]

469. शङ्खः भोजयेद्यथवाप्येकं ब्राह्मणं पङ्क्तिपावनम्।
दैवे[1] कृत्वा तु नैवेद्यं पश्चात्तस्य[2] तु निर्वपेत्॥

470. शङ्खः यद्येकं भोजयेच्छ्राद्धं दैवं तत्र कथं भवेत्।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु॥

---

466. नि०सि०क०, p. 186 [दत्तं चेदासुरं]; पा०गृ०सू०, p. 174 [as नि०सि०]; प्र०पा०नृ०, p. 183 [as नि०सि०]; वि०पा०अन०, p. 445.

467. स्मृ०मु०वै०, p. 771.

468. स्मृ०मृ०वै०, p. 721.

469. कृ०क०ल० (IV), p. 125 [1 दित्ये]; गो०ध०सू० (परि०), p. 32 [2 ब्रह्मौ तु तत्क्षिपेन्]; चतु०सं०भ०, p. 142 [om. cd.]; नि०सि०क०, p. 328; नृ०प्र०दल०, p. 127; प०सं०मा० (v.I. 11), p. 364 [om. cd.]; या०स्मृ०अ० I. 228, p. 464; या०स्मृ०वा० I. 228, p. 507; या०स्मृ०वी०मि०, I. 228, p. 294; श्रा०म०नी०, p. 42[om. cd]; श्रा०म०बापु०, p. 97; स्मृ०च०दे० (III), p. 405 [om. cd]; स्मृ०मु०वै०, p. 778 [om cd].

470. श्रा०म०नी०, p. 42.

देवतायतने कृत्वा यथाविधि निवेदयेत्।
प्रास्येदन्नं तदग्नौ तु दद्याद्वा ब्रह्मचारिणे॥

471. शङ्खः एक एव यदि विप्रो द्वितीयो नोपपद्यते।
पितॄणां ब्राह्मणो योज्यो दैवं ( वे ) त्वग्निं नियोजयेत्॥

**[ पवित्रलक्षणम् ]**

472. शङ्खः अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्॥

473. शङ्खः विरञ्चिना सहोत्पन्न परमेष्ठी निसर्गज।
नुद सर्वाणि पापानि दर्भ स्वस्तिकरो भव॥

474. शङ्खः कर्मकाले प्रकुर्वीत सपवित्रामनामिकाम्।
लङ्घयेदेकपर्वास्या द्वितीयं नैव लङ्घयेत्॥

**[ ब्राह्मणप्रार्थना ]**

475. शङ्खलिखितौ प्रयतोऽपराह्णे शुचिः शुक्लवासा दर्भहस्तः[1] स्वागतमिति ब्रूयात्। पाद्यार्घ्याचामनीयोदकानि दत्त्वा ब्राह्मणानुप्रसंगाद्योपवेशयेदासनमन्वालभ्य।

476. शङ्खः उदकप्लवमुदीच्यां तद्दक्षिणां दक्षिणाप्लवम्।
उत्तरे कृतसंयुक्तान्पूर्वाग्रान्विन्यसेत्कुशान्॥
दक्षिणे दक्षिणायान्तु सतिलान्विन्यसेत्कुशान्॥

471. श्रा०क०नन्द०, p. 40.
472. कृ०स०अ०, p. 36; नि०सि०क०, p. 288.
473. आ०र०ल०, p. 25; नि०सि०क०, p. 288.
474. श्रा०क०गो०, p. 52.
475. कृ०क०ल० (IV), p. 118 [1 दर्भेषु तिष्ठन्]; श्रा०कौ०गो०, p. 109; स्मृ०च०दे० (III), p. 436 [om. from पाद्या upto °लभ्य]; स्मृ०मु०वै०, p. 791 [om. as स्मृ०च०].
476. म०पा०मद० (VIII), p. 568.



477. शङ्खः नाम चैव तथोत्पत्तिर्न विदुर्ये[1] द्विजातयः।
श्लोकमेते[2] पठेयुस्ते ब्राह्मणानां समीपगाः॥
आगच्छन्तु महाभागा विश्वेदेवा महाबलाः।
ये अत्र विहिताः श्राद्धे सावधाना भवन्तु ते॥

478. शङ्खः त्रीण्येव पात्राणि सतिलकुशगन्धोदकानि।

479. शङ्खलिखितौ अपसव्यं वासो यज्ञोपवीते कृत्वा तिलैरवकीर्य यवसुरभितिलोन्मिश्रं पात्रेषूदकं दत्त्वा शन्नो देवीरिति [ ब्राह्मणाननुज्ञाप्य पितॄनावाहयिष्यामीति उशन्तस्त्वेति आवाह्य पवित्रान्तरितेषु ब्राह्मणहस्तेषूदकं निनयेत्।

480. शङ्खः अक्षय्यासनयोः पाद्ये गोत्रं नाम प्रकाशयेत्।
क्षणे च पिण्डदाने च गन्धधूपादिके तथा॥

481. शङ्खः आवाहनार्घ्यसङ्कल्पे पिण्डदानान्नदानयोः।
पिण्डाभ्यञ्जनकाले तु तथैवाञ्जनकर्मणि॥

482. शङ्खः उपवीती ततः कुर्याद्विप्रः श्राद्धेऽनुलेपनम्।
नियुक्तश्च शिखावर्जं माल्यं शिरसि धारयेत्॥

483. शङ्खः उपवीतं कटौ कृत्वा कुर्याद्गात्रानुलेपनम्।
एकवासाश्च[2] योऽश्नीयान्निराशाः पितरो गताः॥

484. शङ्खः सयवं पुष्पमादाय चरणादिशिरोन्तकम्।
अर्चतेत्यर्चनं कुर्यादनारे चोदकं तथा॥

477. स्मृ०च०दे० (III), p. 444; स्मृ०मु०वै०, p. 797 [1 विदुर्ये; 2 °मेत].
478. च०चि०हे० (III.1), p. 1281.
479. आ०र०ल०, p. 62 [reading upto कृत्वा]; कृ०क०ल० (IV), p. 151 & (second time) [reads from ब्राह्मणा °upto आवाह्य].
480. श्रा०क०नन्द०, p. 91 [om. 1.2]; श्रा०मं०बापु०, p. 18 [1 °सन पादेषु].
481. नि०सि०क०, p. 249; श्रा०क०नन्द०, p. 91; श्रा०म०वापु०, p. 18.
482. श्रा०कौ०गो०, p. 140.
483. या०स्मृ०अ० I.234, p. 468; श्रा०क०नन्द०, p. 70 [2 मात्रा (for गात्रा).]; स्मृ०च०दे० (III), p. 454 [2 ये यान्ति (for योऽश्नीयाद्)]; स्मृ०मु०वै०, p. 800 [1 यः कुर्याद्गात्रलेपनम्].
484. नि०सि०क०, p. 305; या०स्मृ०बा०, I. 229, p. 509.

485. शङ्खः उग्रगन्धीन्यगन्धीनि चैत्यवृक्षोद्भवानि च।
पुष्पाणि वर्जनीयानि रक्तवर्णानि[1] यानि च॥

486. शङ्खः रौरवागरुकर्पूरक्षोदैर्गन्धं प्रशंसति।
तुलसीभृङ्गराजं च धातुपात्रेऽर्घ्यमेव च॥
व्यञ्जनादि सुदीप्तां च धूपं देवः प्रशंसति॥

487. शङ्खः जलोद्भवानि देयानि रक्तान्यपि विशेषतः।
ऊर्णासूत्रं प्रदातव्यं कार्पासमथवा नवम्॥

488. शङ्खः जपादिकुसुमं झिण्टीरुपिका सुकुरष्टिका।
पुष्पाणि वर्जनीयानि श्राद्धकर्मणि नित्यशः॥

489. शङ्खः धूपार्थे गुग्गुलं दद्याद्घृतयुक्तं मधूत्कटम्।

490. शङ्खः घृतेन दीपो दातव्यस्तिलतैलेन[1] वा पुनः।
वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत्॥

---

485. का०सा०गदा० (I), p. 330 [1 °नय सारिणः]. कृ०क०ल० (IV), p. 155; कृ०स०अ० (परि०), p. 34 [om. 1.1]; च०सं०भ०, p. 146; धर्मा०श्लो०शेष०, p. 39; नि०सि०क०, p. 306; प०सं०मा० (v.I.11), p. 393; पा०गृ०सू०, p. 306; प०सं०मा० (v.I.11), p. 393; पा०गृ०सू०, p. 455; या०स्मृ०अ०, I. 234, p. 468; वर्ष०कौ०गो०, p. 166. [transt. पुष्पाणि and वर्जनीयानि]; श्रा०क०नन्द०, p. 71; स्मृ०च०दे० (III), p. 434; स्मृ०मु०वै०, p. 789.

486. धर्मा०श्लो०शेष०, p. 39.

487. का०सा०गदा०, p. 530 [om. cd]; कृ०क०ल० (IV), p. 155; नि०सि०क०, p. 306 [om. cd]; प०सं०मा० (v.I.11), p. 394 [om. cd]; या०स्मृ०अ०, I.234, p. 486 [om. cd]; या०स्मृ०बा० I.252, p. 512 [om.cd]; स्मृ०च०दे० (III), p. 434 [om. cd]; स्मृ०मु०वै०, p. 789 [om. cd].

488. श्रा०क०नन्द०, p. 71.

489. कृ०क०ल० (IV), p. 155; कृ०स०अ०, p. 34; या०स्मृ०अ०, I. 234, p. 486 [1 मद (for मधु).]; स्मृ०च०दे० (III), p. 454 [युक्तमधूपं दद्यात्].

490. का०सा०गदा० (I), p. 531; कृ०क०ल०, (IV), p. 155, [om. cd]; नृ०प्र०दल०, p. 122 [1 तथा चान्यौषधीरसैः]; प०सं०मा० (v.I.11), p. 395 [as नृ०प्र०]; पा०गृ०सू० (परि०), p. 448; या०स्मृ०मि०, I.232, p. 67; श्रा०क०नन्द, p. 72 [as नृ०प्र०]; श्रा०कौ०गो०, p. 144 [om.cd]; स्मृ०च०दे० (III), p. 435 [as नृ०प्र०]; स्मृ०गु०वै० p. 990 [तथा वाप्यौषधीरसैः].



491. शङ्खः कौशेयं क्षौमकार्पासं दुकूलमहतं तथा।
श्राद्धेष्वेतानि यो दद्यात्कामानाप्नोति पुष्कलान्॥

492. शङ्खः अजस्य दक्षिणे कर्णे पाणौ विप्रस्य दक्षिणे।
अप्सु चैव कुशस्तम्बे अग्निं कात्यायनोऽब्रवीत्॥
रजते च सुवर्णे च नित्यं वसति पावकः।

493. शङ्खलिखितौ अङ्गुष्ठमुपयम्येदं विष्णुरिति जानू निषद्य भूमौ पितॄन्ध्यायन्मनसा।

494. शङ्खलिखितौ धूपगन्धमाल्यैरलङ्कृत्य ब्राह्मणान्सघृतमन्नं समनुज्ञाप्य[1] दर्भैर्दक्षिणामुखैरग्निं[2] परिस्तीर्य जुहुयात्। यमायाङ्गिरसे[3] पितृमते स्वाहा। अग्नये कव्यवाहनाय स्वाहा। सोमाय पितृमते स्वाहा।

495. शङ्खः यथा विभवसारेण वस्त्रं दद्यात्तु पैतृके।
उत्तरीयमभावे तु शोभनं दर्भनिर्मितम्॥

496. शङ्खलिखितौ संतानवर्धनं पुत्रं[1] युक्तं च पितृकर्मणि।
देवब्राह्मणसम्पन्न[2]मभिनन्दन्ति पूर्वजाः॥

497. शङ्खः दर्भैर्दक्षिणाग्रैरग्निं परिस्तीर्य जुहुयादित्युपक्रम्य जानू निषद्य भूमौ पितॄन् ध्यायन्मनसा ततस्तिलैर्मांसैः

---

491. च०सं०भ०, p. 146.

492. नृ०प्र०दल०, p. 150; या०स्मृ०अ० I.236, p. 491; श्रा०म०नी०, p. 49 [om. ab]; सं०र०गो०दी०, p. 999 [om. ab].

493. As Quoted in 'शङ्खलिखितधर्मसूत्र' : 216 by Dr. Kane.

494. कृ०क०ल० (IV), p. 162; म०पा०मद० (VII), p. 589 [1 om. सम्; 2 अग्रैर् (for मुखैर्); 3 om from यम upto °मते स्वाहा].

495. स्मृ०मु०वै०, p. 791.

496. कृ०क०ल० (II), p. 433; नि०प्र०नृ०वाण०, p. 544 [1 पुत्रमुदयुक्तं पुत्रकर्मणि; 2 संपन्नः देव ब्राह्मणपूजकः also reads with v.l. सन्तानवर्धनः पुत्रः प्रजोत्पादनविहितः].

497. कृ०क०ल० (IV), p. 175 [om. upto मनसा; 1 सूपैः; 2 adds भव्यैः पानैर् before मधुना; 3 पायसेन; cont. on page 188 [4 om. च; अन्नगुणदोषैर्नाभिवदेयुः; adds नानृतं ब्रूयुः; 5 om. न विकृतं ब्रूयुः; 6 °संज्ञाया; यावत्प्रशस्तं;

शाकैर्यूषैः[1] कृसरपायसापूपैर्लाजैर्मधुना[2] घृतेन दध्ना पयसा[3] च प्रभृति मिष्टतोऽन्नं दद्यादनसूयुः। ब्राह्मणाश्चाश्नन्तः[4] न गुणदोषानभिदध्युः नान्योन्यं प्रशंसेयुः। अन्नपानं प्रभूतमिति न ब्रूयुः। न[5] विकृतं ब्रूयुः अन्यत्र हस्तसंज्ञानात्।[6] यावत्सोष्मान्नं तावदश्नन्ति पितरः अन्यत्र मूलफलपानेभ्यः[7] पवित्रपाणिर्दर्भेष्वासीनो[8] मधुवातीयं[9] जपेत्। पवित्रं धर्मशास्त्रम्। अप्रतिरथं मध्ये गायत्रीमनुश्राव्य।

498. शङ्खः
उच्छिष्टोच्छिष्टसंस्पर्शे स्पृष्टमात्रं[1] विसृज्य च।
सर्वान्नं पूर्ववद्दत्त्वा[2] भोजयेत्तु द्विजोत्तमाः॥[3]

499. शङ्खः
अन्यत्पात्रं निधायात्र सर्वान्नं परिवेषयेत्।
परिषिच्य ततः पश्चाद्भोजयेत्तु द्विजोत्तमः॥

7 फलमूलपानकेभ्यः; cont. on page 196 [8 पवित्राञ्जलिपाणि; 9 °वार्ता इति जपेत्]; का०सा०गदा०, I. 553 [begins from ब्राह्मणान्नं गुणदोषैरभिवदेयुः नानृतं ब्रूयुः अन्नदानं; 5 om न to युः; 6 संज्ञया; adds यावत्प्रशस्तं यावत्सोष्म; 7 फलमूलेभ्यः]; या०स्मृ०अ०, I.239, p. 500 [reads from ततस्तिलैः; 1 सूपैः; 2 °भक्षैः पानैर्मधुना]; cont. I.238 & p. 497 [4 ब्राह्मणान्नं गुणदोषैर्नाभिवदेयुः। नानृतं ब्रूयुः; 5 om. न to युः; 6 यावद्भूमौ यावत्प्रशस्तं यावत्सोष्मः फलमूलपानकेभ्यः]; या०स्मृ०वि०, I.236, p. 158; श्रा०कौ०गौ० p. 169 [reads only ब्राह्मणा गुणदोषौ न वदेयुर्न चान्योन्यं प्रशंसेयुर्न च गृहयेयुरन्नपानं प्रभूतमिति न ब्रूयुः; & p. 174 [reads पवित्राञ्जलिर्पाणिर्दर्भेष्वासीनो जपेत्]; श्रा०म०नी०, p. 53 [begins ब्राह्मणान्नं गुणदोषैर्नाभिवदेयुः। नानृतं ब्रूयुः। अन्योन्यं न प्रशंसेषुः। अन्नपानं प्रभृतमिति न ब्रूयुः। अन्यत्रहस्तसंज्ञया यावद्भूमौ यावत्प्रशस्तं यावत्सोष्य तावदश्नति पितरौ ह्यन्यत्र फलमूलपानकेभ्यः]; & cont. on p. 50 [दर्भेष्वासीनो मधुवाता ऋचो जपेत्]; and cont. on p. 51 [अप्रतिरथं मध्ये गायत्रीमनुश्राव्य इति]; स्मृ०च०दे०, p. 467 [अन्नपानं भूतमिति ब्रूयुरन्यत्र हस्तसंज्ञया]; स्मृ०मु०वै०, p. 808 [Cf. स्मृ०दे० प्रभूतमिति न ब्रूयुः।].

498. श्रा०क०नन्द०, p. 79 [1 स्पर्शस्पृष्टविहृत्य च; 2 क्षिप्त्वा; 3 °तमम्]; स्मृ०मु०त्रै०, p. 429.

499. स्मृ०मु०वै०, p. 810.



उच्छिष्टस्पर्शनं ज्ञात्वा तत्पात्रं परिहृत्य च।
अस्पृष्ट्वा पाणिना पात्रं भूमिं समनुलिप्य च॥

500. शङ्खः
हुङ्कारेणापि यो ब्रूयाद्धस्ताद्वापि गुणान्वदेत्।
भूतलाच्चोद्धरेत्पात्रं मुञ्चेद्धस्तेन वापि तम्॥[1]
प्रौढपादो बहिः[2] कक्षो बहिर्जानु करोऽथवा।
अङ्गुष्ठेन विनाश्नाति मुखशब्देन वा पुनः॥
पिताविशिष्टं तोयादि पुनरुद्धृत्य वा पिबेत्।
खादितार्थं पुनः खादेन्मोदकानि फलानि वा॥[3]
मुखेन वा[4] धमेदन्नं निष्ठीवेद्भाजनेऽपि वा।
इत्थमश्नन्द्विजः[5] श्राद्धं हत्वा गच्छत्यधोगतिम्॥
पवित्रपाणयः सर्वे ते च मौनव्रतान्विताः।
उच्छिष्टोच्छिष्टसंसर्गं वर्जयन्तः परस्परम्॥
न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन।
न पादौ न शिरो नास्थि न पदा भाजनं स्पृशेत्॥
आसनेषु समारूढो मन्त्रमुच्चरते द्विजः।
स चौरः स पापिष्ठो ब्रह्महा स च उच्यते॥
आसनस्थो यदा विप्रो मन्त्रमुच्चरते यदि।
त्रयस्ते नरकं यान्ति दाता भोक्ता पिता तथा॥

501. शङ्खः
श्राद्धपङ्क्तौ[1] तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत्।
तदन्नमत्यजन्भुक्त्वा[2] गायत्र्यष्टशतं जपेत्॥

500. नृ०प्र०दल०, p. 161 [om. l.1-3; 3 च; 4 ग्रसेद्; om. l.8-10; om. l.12-16 and reads तृप्तान्बुद्धान्नमादाय सतिलं पूर्ववज्जपेत्]; प०सं०मा० (v.I.11), p. 425 [reads upto ०धो गतिम्]; प०सं०मा० (v.II.1), p. 453 [हुङ्कारं ब्राह्मणस्योक्त्वा त्वंकारं च गरीयसः। दिनमेकं व्रतं कुर्यात् प्रयतः सुसमाहितः]; पा०गृ०सू० (परि०), p. 442 [1 तत्पिबेत्; 2 कृच्छ्रो; 3 च; 5 °मन्त्रं] & p. 476 [reads only l.1]; या०स्मृ०बा० 1.249, p. 543 [om. l.1; 4 तो पिबन्; 3 च; 5 °मन्त्रं द्विजो भुक्ता श्राद्धे ग °].

501. चतु०सं०भ०, p. 167; नि०सि०क०, p. 318; नृ०प्र०दल०, p. 160; प०सं०मा० (v.I.11), p. 424; पा०गृ०सू० (परि०), p. 476 [1°क्लिषु; 2 भुक्त्वासदन्न-

उच्छिष्टलेपनस्पर्शे प्रक्षाल्यान्येन वारिणा।
भोजनान्ते नरः स्नात्वा गायत्रीं त्रिशतं जपेत्॥

502. शङ्खः भुञ्जानस्य तु विप्रस्य सिक्थोच्छिष्टं तु यः स्पृशेत्।
प्रक्षाल्य भुक्त्वा स्नात्वा च गायत्रीं द्विशतं जपेत्॥
उच्छिष्टभोजने चैव सहस्रं समुपोषणम्॥

503. शङ्खलिखितौ गायत्रीमनुश्राव्य[1] तृप्तान्ज्ञात्वा स्वदितमिति पृष्ट्वा शेषमन्नमनुज्ञाप्य [2]प्रकृतादन्नविकिरं कुर्यात्। स्वधां वाचयित्वावशिष्टांशस्त्रीन् निदध्यात्। त्रीण्येवोदपात्राणि सतिलानि सप्रवित्राणि मृन्मयाश्ममयौदुम्बराणि वा धूपगन्धमाल्यादर्शदीपाञ्जनादीनि चोपहरेत्। सर्वान्नप्रकारमादाय पिण्डान्निदध्यात्। अपसव्येन पाणिना दक्षिणं पाणिमुपधार्यैकैकं त्रिभिरभिमन्त्र्यासावेतत्त इति। दर्भेषु तेष्वेव पाणिं प्रमृज्योदपात्रैः परिश्राव्य ब्रूयाद्दातारः सन्त्विति बहुदेयं नोऽस्त्विति॥

[ श्राद्धे विहितानि ]

504. शङ्खः श्राद्धं कृत्वा प्रयत्नेन त्वराक्रोधविवर्जितः।
उष्णमन्नं द्विजातिभ्यः श्रद्धया विनिवेदयेत्॥
अन्यत्र फलमूलेभ्यः[1] पानकेभ्यश्च पण्डितः।
भोजयेद्विधिवत्पश्चाद्गन्धमाल्योज्ज्वलान्द्विजान्॥

---

मत्यजं]; या०स्मृ०बा० I.249, p. 544; श्रा०क०नन्द०, p. 79; श्रा०म०नी०, p. 53; श्रा०मं०बापु०, p. 31; सं०र०गो०दी०, p. 1001; स्मृ०च०दे०, p. 468; स्मृ०मु०वें०, p. 429 & p.810; स्मृ०र०के०, fol. 120.

502. चतुः, सं०भ०, p. 167; श्रृ०मं०बापु०, p. 31 [1.3 उच्छिष्टोच्छिष्टसंस्पर्शे]; स्मृ०मु०वै०, p. 429 & p. 810; या०स्मृ०बा०, I. 249, p. 544; स्मृ०र०के० fol. 120.

503. कृ०क०ल० (IV), p. 202; श्रा०म०नी०, p. 55 [1 °त्रीसमनु-; 2 om प्र-]; & p. 57 [reads only पिण्डान्निदध्यात्सव्येन पाणिना दक्षिणं पाणिमुपसंयोजयेत्].

504. का०सा०गदा०, (I), p. 546 [om. 2-1]; कृ०क०ल० (IV), p. 175 [1-पुष्पेभ्यः]; म०स्मृ०कु० III. 236, p. 133; या०स्मृ०अ०, I.237, p. 492 [om. l.1 & l.2]; श्रा०कौ०गौ०, p. 160.



505. शङ्खः उत्पवनं पूर्वभागस्थितस्य कस्यचिदंशस्यापनयनम्।
अधिकपरिमाणवतां प्लावनं द्रवाणां त्यागः॥

506. शङ्खः सैन्धवं लवणं यच्च[1] तथा मानससंभवम्।
पवित्रे परमे ह्येते प्रत्यक्षमपि नित्यशः॥

507. शङ्खः आम्रान्पालकान्निम्बून्मृद्वीकाभव्यदाडिमान्।[1]
विदार्यांश्च भरुडांश्च श्राद्धकालेऽपि[2] दापयेत्॥

508. शङ्खः द्राक्षां मधुयुतां दद्यात्सक्तूञ्शर्करया सह।
दद्याच्छ्राद्धे प्रयत्नेन शृङ्गाटककशेरुकान्॥

509. शङ्खः आम्रांश्च कदलीभेदान्मृद्वीकां वन्यदाडिमे।
बदर्यांश्च सुरण्डांश्च श्राद्धकालेऽपि दापयेत्॥

510. शङ्खः राजीवाः सिंहतुण्डाश्च सशल्काश्च तथैव च।
पाठीनरोहितौ वापि[1] भक्ष्या मत्स्येषु कीर्तिताः॥

[ श्राद्धभोजने निषिद्धानि ]

511. शङ्खः नाद्याच्छ्रा[1]द्धनिषिद्धं तु भक्ष्यभोज्यादिकं द्विजः॥

512. शङ्खः पिप्पली मरिचं हिङ्गुं वंशाग्रं च विवर्जयेत्॥

513. शङ्खः भूस्तृणं सुरसं[1] शिग्रुं पालङ्क्यां सृमृकं[2] तथा।
कुष्माण्डालाब[3]वार्ताककोविदारांश्च वर्जयेत्॥

---

505. नृ०प्र०दल०, p. 85.

506. कृ०क०ल० (IV), p. 180; स्मृ०मु०वै०, p. 784 [1 चैव].

507. का०सा०गदा० (I), p. 538; कृ०क०ल० (IV), p. 45 [2 प्रदापयेत्]; प०सं०मा० (v.I.11), p. 370 [1 °दाडीमम्]; श्रा०म०नी०, p. 32 [1 °दाडीनाम्];

508. प०सं०मा०, (v.I.11), p. 370.

509. स्मृ०मु०वै०, p. 781.

510. कृ०क०ल० (III), p. 310; मा०ध०रा०, p. 596 [1 चापि].

511. नृ०प्र०दल०, p. 71 [1 शास्त्र-]; स्मृ०च०दे० (III), p. 418.

512. श्रा०कौ०गो०, p. 19.

513. का०सा०गदा०, p. 544 [2 सुमुखं; 3-वार्ताकी]; कृ०क०ल० (IV), p. 52; नि०सि०क०, p. 292 [1 सुरसा शिग्रु पालङ्की भृचुकं तथा]; म०पा०मद० (VII), p. 554 [1 पालक्यं मधुकं; 3 वार्ताकु-]; श्रा०क०नन्दः, p. 59 [ab as म०पा० 2 पालावुचोर्वारुको]; स्मृ०सा०वि०, p. 211 [ab as म०पा०; 3 °वारु].

514. शङ्खः पिण्डालकं च तुण्डीरं करमर्दं च नालिकम्।
कुष्माण्डं बहुबीजानि श्राद्धे दत्त्वा व्रजत्यधः॥

515. शङ्खः वर्जयेद्गृञ्जनं श्राद्धे काञ्जिकां पिण्डमूलकम्।
कलम्बां यानि चान्यानि हीनानि रसगन्धतः॥
श्राद्धकर्मणि वर्ज्यानि कारणं चात्र वक्ष्यते।
पुरा देवासुरे युद्धे निर्जितस्य बलेः सुरैः॥
ब्राह्मणेभ्यो विस्फुरन्तः पतितास्तोयबिन्दवः।
तत एतानि जातानि वर्ज्यानि श्राद्धकर्मणि॥
पिप्पली मरिचं चैव पटोलं बृहतीफलम्।
वंशं करीरं सुरसं गर्जकं भूतृणानि च॥
अवेदोक्ताश्च निर्यासा लवणान्यूषराणि च।
श्राद्धकर्मणि वर्ज्याणि याश्च नार्यो रजस्वलाः॥

516. शङ्खः कृष्णाजाजी विटं चैव शीतपाकी तथैव च।
वर्जयेल्लवणं सर्वं तथा जम्बूफलानि च॥
अवक्षुतावरुदितं तथा श्राद्धेषु वर्जयेत्॥

517. शङ्खः बिडालोच्छिष्टमाघातं श्राद्धे यत्नेन वर्जयेत्।
कुष्माण्डं महिषीक्षीरमाढक्यो राजसर्षपाः॥
चणका राजमाषाश्च घ्नन्ति श्राद्धं न संशयः॥

518. शङ्खः पिप्पली मरिचं चैव तथा वै पिण्डमूलकम्।
कृतं च लवणं सर्वं वंशाग्रं[1] च विवर्जयेत्॥

514. नि०सि०क०, p. 292.
515. नृ०प्र०दल०, p. 64.
516. नृ०प्र०दलः, p. 65; पं०सं०मा० (v.I.1), p. 377; पा०गृ०सू०, p. 524 [om.l.3]; स्मृ०च०दे०, (III), p. 415; स्मृ०मु०वै०, p. 784 [शीतपाकीमपि श्राद्धे कृष्णजीरकमेव च; om.l.3].
517. नि०सि०क०, p. 292; श्रा०मं०बा०, p. 4 [om. cd].
518. का०सा०गदा०, p. 544; कृ०क०ल० (IV), p. 52; नि०अ०, p. 221 [1 विरसं]; नि०सि०क०, p. 292; पा०गृ०सू०, p. 524; म०पा०मद० (VII), p. 554; श्रा०क०नन्द, p. 58; स्मृ०च०रे०, p. 415 [om.l.1.]; स्मृ०मु०वै०, p. 784 [तु (for च).].



519. शङ्खः राजमाषान्मसूरान्श्चकोद्रवान्कोरदूषकान्।
लोहितान्वृक्षनिर्यासान्श्राद्धकर्मणि वर्जयेत्॥

520. शङ्खः श्राद्धे नियुक्ताभुञ्जानान्न पृच्छेल्लवणादिषु।
उच्छिष्टाः पितरो यान्ति पृच्छतो नात्र संशयः॥

521. शङ्खः दातुः पतति बाहुर्वै जिह्वा भोक्तुस्तु[1] भिद्यते।

522. शङ्खलिखितौ तत्रापेयान्यभक्ष्याणि च वर्जयेदमेध्यपतितचण्डाल-पुल्कसरजस्वलाकुणपकुष्ठिस्पृष्टानि।

523. शङ्खः भीता[1]वगीतरुदिताक्रन्दिता[2]वघृष्टाक्षुधित[3]परि-भुक्तविस्मितोन्मत्तावधूतराजपुरोहितान्नानि[4] वर्जयेत्।

524. शङ्खः न तदश्नीयाद्यदन्नं देवपितृमनुष्यार्थं[5] न कुर्यात्।

### [ पिण्डदानक्रिया ]

525. शङ्खः उच्छिष्टसन्निधौ कार्यं पिण्डनिर्वपणं बुधैः।
आदौ वापि तथा कुर्यादग्निकार्यं यथाविधि॥

519. का०सा०गदा० (I), p. 544; कृ०क०ल० (IV), p. 52; नि०सि०क०, p. 292.
520. नि०सि०क०, p. 295; य०सं०या० (v.I.11), p. 425; पा०गृ०सू०, p, 476; श्रा०क०नन्द०, p. 78; श्रा०म०नी०, p. 50; श्रा०मं०बापु०, p, 29; श्रा०वि०रु०, p. 117; स्मृ०च०दे०, p. 469; स्मृ०मु०वै०, p. 809.
521. प०सं०मा०, (v.I.11), p. 425 [1 च]; श्रा०म०नी०, p. 50; श्रा०वि०रु०, p. 117, स्मृ०च०रे०, (III), p. 469 [transp. दातुः and बाहुः]; स्मृ०मु०वै०, p. 809 [1 च, transp. as स्मृ०च०].
522. वी०मि०मि०मि०, p. 519-520.
523. आ०र०ल०, p. 106 [2 क्रन्दित (for [आ] क्र०); 3 om. क्षुधित]; आ०सा०गदा०, p. 414 [भीतरुदितक्रन्दितक्षुतावधूतान्नानि वर्जयेत्]; आ०भू०त्र्यं०, p. 298 [2 om. क्रन्दिता; वध्युष्टक्षुतपरिभुक्तं; 4 °हित कृतघ्नाः]; कृ०क०ल० (III), p. 266. [1 om. अवगीत; 3 वक्रुष्ट क्षुतपरि०]; या०स्मृ०अ०, I. 164, p. 240 [3 वाक्रुष्टक्षुत परि०]; या०स्मृ०मि०, I.165; p. 46; वी०मि०मि०मि०, p. 504, [as कृ०क०].
524. स्मृ०न०र० (II), p. 82.
525. कृ०क०ल०, (IV), p. 211; गो०गृ०सू०भ०ना०, p. 763-764 [only ab].

526. शङ्खः सकृत्त्रिर्वा विकिरं कुर्यात्।

527. शङ्खलिखितौ सव्येन पाणिना दक्षिणं पाणिमुपसमाधाय एकैकं त्रिभिरामन्त्र्य असावेतत्ते।

528. शङ्खलिखितौ यथावनिक्तं पिण्डान्दद्यादसावेतत्ते।

529. शङ्खः गन्धमाल्यधूपाच्छादनसिद्धोपहारैः पिण्डं निर्वपेत्।

530. शङ्खः ऊर्णासूत्रं प्रदातव्यं[1] कार्पासमथवा नवम्।
दशां विवर्जयेत्प्राज्ञो यद्यप्यहतवस्त्रजा॥[2]

### [ पिण्डनैवेद्यः ]

531. शङ्खः यत्किञ्चित्पच्यते गेहे भक्ष्यं भोज्यमथापि[1] वा।
अनिवेद्य न भोक्तव्यं[2] पिण्डमूले कथञ्चन॥

### [ ब्राह्मणविसर्जनम् ]

532. शङ्खलिखितौ एवं वरान्याचयित्वा नमस्कृत्य पिण्डानप्सु विन्य-सेदग्नौ[1] वा निक्षिपेत्।

---

526. म०स्मृ०मे०, (III). 24, p. 285.
527. का०सा०गदा० (I), p. 570; श्रा०कौ०गो०, p. 63 [reads from एकैकं].
528. श्रा०कौ०गो०, p. 64.
529. म०स्मृ०मे०, (III), 216, p. 277.
530. कृ०क०ल०, (IV), p. 155 [om. 1.1; 2-वस्त्रजां]; दा०कौ०गो०, p. 41 [2 °प्याहनवस्त्रजां]; म०पा०मद० (VII), p. 602 [as दा०कौ]; या०स्मृ०अ०, I. 141, p. 508, वर्ष०कौ०गो०, p. 172 [as दा०कौ०]; श्रा०कौ०गो०, p. 144-145 [as दा०कौ०]; स्मृ०च०दे०, (III), p. 476 [1 तु दातव्यं; 2 °जां०].
531. कृ०क०ल० (IV), p. 211 [2 वा भोज्यमेव]; गौ०गृ०सू०भ०ना०, p. 763 [2 भुञ्जीत]; नि०सि०क०, p. 323 [1 भोज्यमगर्हितम्]; श्रा०कौ०गो०, p. 223 [2 भुञ्जीत]; श्रा०म०बापु०, p. 37 [as नि०सि०]; स्मृ०त०र०, p. 184 [as श्रा०कौ०].
532. कृ०क०ल० (IV), p. 225 [1 पिण्डानग्नौ वाप्सु वा क्षिपेत्]; या०स्मृ०, I. 256, p. 550.



533. शङ्खलिखितौ पत्नी वा[1] मध्यमं पिण्डमश्नीयादार्तवस्नाता।[2]

534. शङ्खः भोजयित्वा यथा भक्त्या आचान्तान्दत्तदक्षिणान्।
स्वस्तिवाच्य प्रसन्नात्मा अनुव्रज्य विसर्जयेत्॥

535. शङ्खलिखितौ बलिं बलिभुजो यत्र प्रदत्तं नैव भुञ्जते।
नैव तृप्ताः प्रयास्यन्ति पितरस्तस्य सानुगाः॥

### [ सपिण्डीकरणम् ]

536. शङ्खलिखितौ अपुत्रा ये मृताः केचित्पुरुषा वा स्त्रियोऽपि वा।
तेषां वस्वादिभिः सार्धं सपिण्डीकरणं ध्रुवम्॥

537. शङ्खः मातुः सपिण्डीकरणं कथं कार्यं भवेत्सुतैः।
पितामह्यादिभिः सार्धं[1] सपिण्डीकरणं स्मृतम्॥

538. शङ्खः पुत्राणामसवर्णानामव्रतानां च योषिताम्।
सपिण्डता विनिर्दिष्टा पितृपक्षे त्रिपूरुषी॥

539. शङ्खः सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते।
तत्र तत्र[1] त्रयं कुर्याद्वर्जयित्वा मृताहनि॥[2]

540. शङ्खः पूर्वेद्युर्वार्षिकं[1] श्राद्धं परेद्युः प्रथमाब्दिकम्।[2]

---

533. कृ०क०ल०, (IV), p. 225 [पत्नीं; स्नातां]; नि०सि०क०, p. 324 [2 अश्नीयादार्तवान्विता]; स्मृ०च०दे० (III), p. 486; स्मृ०मु०वै०, p. 817 [1 om. वा०].
534. कृ०क०ल०, (IV), p. 211.
535. स्मृ०मु०वै०, p. 813.
536. या०स्मृ०वा०, I.253, p. 593.
537. का०सा०गदा०, I. p. 424; चतु०सं०भ०, p. 176; नि०अ०, p. 198; नि०सि०क०, p. 430; प०सं०गा०, (v.I.11), p. 456 [1 सार्थं]; म०पा०मद०, p. 623 [1 सार्थं]; श्रा०चि० fol.41; स्मृ०मु०वै०, p. 678; & p. 679 [only cd.]; स्मृ०सा०वि०, p. 207 [1 सार्थं].
538. स्मृ०मु०वै०, p. 498.
539. का०ल०वि०रघु० II, p. 368 [1 त्रिपुरुषं; 2 मृताहिकम्] & p. 431; श्रा०कौ०गो०, p. 434 & p. 472 & p. 473.
540. का०सा०गदा०, p. 411 [1 आब्दिक; 2 पुनर् (for प्रथम).]; श्रा०कौ०गो०, p. 444.

541. शङ्खः अन्वारोहे तु भर्त्रैव मातुः सह सपिण्डनम्।

542. शङ्खः चतुर्दश्यां तु यत्पूर्वं सपिण्डीकरणं स्मृतम्।
एकोद्दिष्टविधानेन तत्कार्यं शस्त्रघातिनः॥

543. शङ्खः सपिण्डीकरणादूर्ध्वमृते कृष्णचतुर्दशीम्।
प्रतिसंवत्सरादन्यदेकोद्दिष्टं न कारयेत्॥

544. शङ्खः कृतेषु मासिकेष्वेषु सपिण्डीकरणं विना।
संवत्सरे व्यतीते तु पुनस्तानि समाचरेत्॥

545. शङ्खः त्रैवार्षिकं च प्रेतं स्याच्छंखस्य वचनं यथा।

### [ श्राद्धफलम् ]

546. शङ्खः प्रजामिष्टां[1] यशः स्वर्गमारोग्यं[2] च धनं तथा।[3]
नृणां श्राद्धे सदा प्रीताः प्रयच्छन्ति पितामहाः॥

### [ श्राद्धे नियमाः ]

547. शङ्खलिखितौ मैथुनं ऋतुकालीनमपि तथा च श्राद्धानन्तरम्
ऋतुस्नातां तदहोरात्रं परिहरेत्।

548. शङ्खः निमन्त्रितस्तु यः श्राद्धे मैथुनं सेवते द्विजः।
श्राद्धं दत्त्वा च भुक्त्वा च युक्तः स्यान्महतैनसा॥

---

541. स्मृ०मु०वै०, p. 678.
542. स्मृ०मु०वै०, p. 666.
543. श्रा०कौ०गो०, p. 294.
544. स्मृ०मु०वै०, p. 656.
545. पा०गृ०सू० (परि०), p. 506.
546. नि०सि०क०, p. 117; प०सं०मा० (v.I.11), p. 326; वी०मि०मि०मि०, p. 174; श्रा०म०, p. 13; स्मृ०कौ०अ०, p. 188 [2 °ग्यवर्धनं]; स्मृ०च०दे०, (III), p. 368; स्मृ०र०के०, fol. 123 [1 -पुष्टिं; 2 °ग्यश्रुतिमेव च; 3 तथा (for सदा). adds ज्ञानीनां च गवेच्छ्रेष्ठः कुर्वन् श्राद्ध त्रयोदशी].
547. का०सा०गदा०, (I), p. 567 [reads only ऋतुस्नातां अहोरात्रं परिहरेत्]; स्मृ०त०र०, p. 185.
548. आ०त्र्य०, p. 360; का०सा०गदा०, (I), p. 514; कृ०क०ल०, (IV), p. 110 [निमन्त्रितस्तु].



549. शङ्खः रात्रौ श्राद्धं न कुर्वीत राक्षसी सा प्रकीर्तिता।
सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते॥

550. शङ्खः क्षत्रियैर्मृगमायान्तु विधिना यदुपाहृतम्।
श्राद्धकाले प्रशंसन्ति सिंहव्याघ्रहतं च यत्॥

551. शङ्खः न कुर्यादधिके मासे कर्माकर्म कथञ्चन।
मुक्त्वा नैमित्तिकं कर्म तद्धि तत्रैव कीर्तितम्॥

552. शङ्खः शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः।
नवमी दशमी चैव नोपोष्या परसंयुता॥

553. शङ्खः सावकाशं तु यत्कार्यं न कुर्यान्मासि दूषिते।
कुर्यान्निरवकाशं तु नित्यं नैमित्तिकं तथा॥

554. शङ्खः सद्यःशौचेऽपि दातव्यं प्रेतस्यैकादशेऽहनि।
स एव दिवसस्तस्य श्राद्धशय्यासनादिषु॥

555. शङ्खः आदौ मध्ये तथान्ते च उदकादि समापयेत्।
स एव दशमे कुर्यात्पाषाणोत्थापनं स्मृतम्।
प्रथमेऽहन्यनारभ्य कर्ता सहतिलोदकम्।
यदि पश्चाच्च कर्तारस्तेऽन्तर्देशे तु संक्रमे॥
कुर्युर्नान्तर्गते दर्शे संक्रमे दशमेऽहनि॥

---

549. का०वि०जी०, p. 361.
550. म०पा०मद०, (VII), p. 552.
551. च०चि०हे०, (परि०), p. 37; पु०चि०वि०, p. 22.
552. स्मृ०मु०वै०, p. 837.
553. सम्‍०मु०वै०, p. 688; p. 692, & p. 734.
554. का०त०वि०रघु० (II), p. 457; म०पा०मद० (VII), p. 614 [दातव्यः]; वी०मि०मि०मि०, p. 213.
555. स्मृ०मु०वै०, p. 615.

# व्यवहाराध्यायः

## राजधर्मप्रकरणम्

### [ राज्ञः आवश्यकता ]

556. शङ्खलिखितौ वर्णाश्रमाणां संस्थानमानुपूर्व्यानुपूर्वशः।
तेषां हेतुरवस्थाने राजा सुप्रस्थितो यदि॥
राजमूलमिदं राष्ट्रं ब्रह्मक्षत्रपुरोगमम्।
स्थिते राजनि तद्धर्मे दुराचारान्न कुर्वते॥

### [ राज्ञो गुणाः ]

557. शङ्खलिखितौ राजा दीर्घदर्शी महोत्साहः शक्तिमाननसूयुर्भक्त[1]-वत्सलः। त्यागी शरण्यः सर्वभूतानां संविभक्तः सत्यवागमत्सरी गम्भीरोऽमर्षणो बुधस्तेजस्वी प्रतिविधानकुशलोऽदीर्घसूत्रो दक्षः क्षमावान्लक्ष्यज्ञो देशकालद्रव्यप्रयोगसङ्ग्रहनिमित्तज्ञानकुशलो गूढमन्त्रप्रचारः संवृत्तरन्ध्रः पररन्ध्रज्ञो दृढप्रहारी लघुहस्तो जितस्थानासनहिमातपो[2] जितरागद्वेषलोभमत्सरः प्रजाभिरामो दीनानुग्रहकर्ता ब्राह्मणेष्वन्नदाता श्रीयशोर्थी।

### [ राजधर्माः ]

558. शङ्खः स मूर्धाभिषिक्तो राजा भवति।

556. कृ०क०ल०, (XII), p. 776 [reads also सुप्रहितो (for सुप्रस्थितो).].
557. कृ०क०ल० (XI), p. 18; वी०मि०मि०मि० (राजनीति), p. 116 [1 भक्तबलस्त्यागी; 2 adds काम after °जिन].
558. गौ०ध०सू०म०भा०, p. 123.



559. शङ्खलिखितौ आफलोदयं मन्त्रगुप्तिः।
560. शङ्खलिखितौ दद्याद्दानमर्चयित्वा ब्राह्मणाय निमित्तपूर्वं शेषेभ्यः। कृपणातुरानाथव्यङ्गविधवाबालवृद्धानौषधावसथाशनाच्छादनैर्बिभृयात्।
561. शङ्खः न व्रतैर्नोपवासेन न च यज्ञैः पृथग्विधैः।
राजा स्वर्गमवाप्नोति प्राप्नोति परिपालनात्॥
562. शङ्खलिखितौ राजन्यवैश्यावप्यजीवन्तौ राजानमुपतिष्ठेयाताम्। तावुभौ शक्तितः संविभक्तावुपकुर्यातां स्वधर्मानुष्ठानेन[1] शिल्पिनः कारवश्च शूद्राः।
563. शङ्खलिखितौ आगमं निर्गमं स्थानं तथा वृद्धिक्षयावुभौ।
विचार्य सर्वशस्यानां कारयेत्क्रयविक्रयौ॥
564. शङ्खलिखितौ स्वपक्षे परपक्षे वा स्थानवृद्धिक्षयाश्रयः।
स्थानादीनां विभागश्च काले द्रव्यार्थसङ्ग्रहः॥
565. शङ्खलिखितौ राज्ञः शंखपटहतूर्येण प्रस्वापोत्थानम्।
566. शङ्खलिखितौ राज्ञः प्रत्यहं घृतान्वीक्षणं मङ्गलदर्शनं कपिलाप्रदानं स्वलंकृतस्य सम्भाषणं वैद्यदर्शनं सप्रहासं सविकल्पं विनयपूर्वं वृद्धेषु।
567. शङ्खलिखितौ वाहनयोधानां सततमन्वीक्षणम्। प्रतिमासं द्विसौवर्णिकी वृत्तिः। षाण्मास्यं स्मरणं चातुर्मास्यं वा।

559. स०वि०प्र० (व्य०), p. 35.
560. कृ०क०ल०, (XI), p. 168; वी०मि०मि०मि० (राजनीति), p. 138.
561. कृ०क०ल०, (XI), p. 85; वी०मि०मि०मि० (राजनीति), p. 255.
562. कृ०क०ल०, (XI), p. 171; वी०मि०मि०मि० (राजनीति), p. 141 [1 repeats स्व०].
563. द०वि०व०, p. 98.
564. कृ०क०ल०, (XI), p. 154; वी०मि०मि०मि० (राजनीति), p. 135.
565. कृ०क०ल०, (XI), p. 162; वी०मि०मि०मि० (राजनीति), p. 154.
566. कृ०क०ल०, (XI), p. 155; वी०मि०मि०मि० (राजनीति), p. 158 [reads upto वैद्यदर्शनं].
567. कृ०क०ल०, (XI), p. 81; [1 om. गुण]; वी०मि०मि०मि० (राजनीति), p. 252.

स्वर्यातेषु दानमनुक्रोशः विदित्तेष्वनुप्रदानं कुल-चरित्रशीलविद्यालक्षणगुणाधिकेषु संमानं प्रयुञ्जीत।

568. शङ्खलिखितौ राजक्रतुरेवाऽश्वमेधस्तं नासार्वभौमः प्रतिपादयितु-मर्हति। अश्वमेधेन यक्ष्य इति परविषयमभियायाद्देश-कालशक्तिसम्पन्नः प्रभूतयवसेन्धनोदकाविच्छिन्न-साम्परायिकः। पथिसंविहतसर्वोपकरणो दुर्गासा-रामात्यदेशदण्डाक्रन्दाद्यगुणविधिज्ञः पर्षदं प्रति नयवान् विन्दितमध्वानं हितमनुक्रामेत् यथा भूमि-भागस्तथा विनियोगः श्रेयान् पानभोजनोपनिवेशः स्थानशङ्काप्रतिविधानकुशलो भूपतिरवहितः शत्रुणा सह युध्येत्।

569. शङ्खः न पानीयं पिबन्तं न भुञ्जानं नोपानहौ मुञ्चन्तं नावमार्णं[1] सवर्मा न[2] स्त्रियं न करेणुं न वाजिनं न सारथिं न दूतं न ब्राह्मणं न राजानमराजा हन्यात्।

570. शङ्खलिखितौ न वैष्टिकं जाङ्घिकं क्षेत्रद्रव्यापहरणे पुष्पमूलप्रचयनं स्वयमर्जितप्रवेशनं निष्क्रमणं प्रवेशनेष्वनिवेदनं स्कन्धबाह्येषु शुल्कोगणसमयश्रोणिपूगचरण-व्यवहारनिष्ठास्वामिनः परिज्ञातारोऽन्यत्र राजाभि-द्रोहान् नगरनिवासिनां विप्रेतराणामपि परिग्रहा अनपराधाः।

571. शङ्खलिखितौ न गृध्नुपरिवारः स्यात्कामं गृध्नू राजा श्रेयान्न हंसपरिवारो[1] न हंसो गृध्नुपरिवारः। परिवाराद्धि

568. कृ०क०ल०, (XI), p. 125; वी०मि०मि०मि० (राजनीति), p. 402.

569. या०स्मृ०मि०, I.326, p. 99 [2 om. न स्त्रियं]; स०वि०प्र० (व्य०), p. 29 [1 reads as नापवर्माणं नाक्तरेणुं न स्त्रियं न वाजिनं न राजानं हन्यात्].

570. कृ०क०ल० (XII), p. 804-805; ध०ल० (व्य०), p. 26 [reads from गणसमय]; & p. 1922; वि०र०च०, p. 662.

571. कृ०क०ल०, (XI), p. 30 [1 सपरिवार and om. न हंसो मृध्नुपरिवारः; 2 लिप्सेत्; om. श्रुत onwards]; या०स्मृ०वि० (I), p. 182 [reads न हंसो गृध्रपरिवारः कामं तु गृध्रो हंसपरिवारः स्याद्]; वी०मि०मि०मि० (राजनीति), p. 185; [3 गृध्नो प्रेयान्].



दोषाः प्रादुर्भवन्ति। तेऽलं विनाशाय तस्मात्पूर्वमेव[3] तत्परिवारं[2] लिखेत् श्रुतशीलान्वयोपपन्नम्।[3]

572. शङ्खलिखितौ सर्वेषां राजकुलरक्षणं कोशपरिपालनं गोब्राह्मण-परित्राणं साम्परायिकं क्रियासाधारणत्वादनुजीविनां विशेषेण चारप्रतिचारौ मन्त्रपरिधयश्च सर्पाः तत्प्रयोजनत्वात्प्रत्यक्षावृत्तिस्तस्य राज्ञो भवेदेकान्ततो हि दोषस्तस्माद् भृत्यपक्षाः क्रोधलोभमानभयदोषो-पहताः संलपिता विमानिताभ्याख्याता दानमान-स्थानव्यवरोपिता हृतसर्वस्वाः स्वदोषोपहतादयः सततं प्रत्यवेक्षितव्या धर्मार्थहितेष्वेतेषां यतेत स्वाविषयाश्रावः परविषयभेदः सामादिभिरुपायै-र्मन्त्रज्ञेषु मन्त्रकर्म दण्डकर्म कर्मकरेषु वीरा महत्स्वात्मनि च धर्मनित्याः सङ्ग्रहेष्वलुब्धा. प्रत्यन्तेषु मौलाः शुचयोऽर्थकृत्येषु अन्येषु यथानुरूपं नियोज्याः।

573. शङ्खलिखितौ विश्वासिनश्चारान्समानयेत्तानन्यत्र प्रेषयेत्।

574. शङ्खलिखितौ राजा स्वस्वाधीनवृत्तिरात्मप्रत्ययकोशः स्वयं कृत्यानुदर्शी विप्रस्वनिवृत्तश्चिरं भद्राणि पश्यति।

575. शङ्खः धर्मस्थानं प्राच्यां दिशि तच्चाग्न्युदकैः समवेतं स्यात्।[1]

576. शङ्खः पैत्रं विनाऽप्यागमेन पूर्वपुरुषाभ्यां भुक्तं लभेत्।

[ राज्ञोऽदण्ड्याः ]

577. शङ्खलिखितौ अदण्ड्यौ मातापितरौ स्नातकपुरोहितौ परिव्राजक-

572. वी०मि०मि०मि० (राजनीति), p. 185-186.

573. स०वि०प्र० (व्य०), p. 32.

574. कृ०क०ल०, (XI), p. 153; वी०मि०मि०मि० (राजनीति), p. 134.

575. ध०ल०(व्य०), p. 126 [1 कुर्यात्] स०वि०प्र० (व्य०), p. 63 [as ध०ल०];स्मृ०च०दे० (II), p. 19.

576. ध०ल० (व्य०), p. 383; स्मृ०च०दे० (II), p. 73.

577. कृ०क०ल०, (XII), p. 780, [2 om. च]; द०वि०व० p. 57-58 [ as कृ०क०ल०]; ध०ल० (व्य०), p. 571 [as कृ०क०ल०]; प०सं०मा० (v.II.1).

वानप्रस्थौ जन्मकर्मश्रुत[1] शीलशौचाचार[2] वन्तश्च एते[3] हि धर्मे प्रतिकरा राज्ञः[4] स्त्रीबालवृद्धास्तपस्विनः। तेभ्यः क्रोधं नियच्छेत्।

578. शङ्खलिखितौ सर्वत्र त्रयाणां वर्णानां धन[1] हारकारवधबन्धाः क्रियासु चोपरोधो महत्स्वपि पातकेषु विवासोङ्ग-करणं[2] ब्राह्मणस्य[3] प्रायश्चित्तानि शोधनमपीड्यो हि ब्राह्मणः।

[ राज्ञो दण्ड्याः ]

579. शङ्खः दण्डो यथा सारापकारं च वयोविद्यावर्णलक्षण-गुणानुगः।

580. शङ्खलिखितौ येन येनाङ्गेनापराधं कुर्यात्तत्तस्य छेत्तव्यम्। अष्टसहस्रं वा दण्ड्यः। अन्यत्र ब्राह्मणात्।

---

p. 1206 [as कृ०क०ल० and om. from एते हि onwards; वि०र०च०, p. 628; वि०से०वि०, p. 325; व्य०नि०व०, p. 527. [1 om. शौच; 3 ते च धर्मे; 4 राज्ञा]; व्य०मा०, p. 94 [3 ये च धर्मवृद्धिकरा राज्ञा]; स्मृ०च०दे० (II), p. 126 [reads with var. upto शीला चारवन्तश्च].

578. कृ०क०ल० (XII), p. 784; द०वि०व०, p. 48. [begins from महत्स्व-; 2 °सनमङ्कनं]; ध०ल० (व्य०), p. 572; प०सं०मा० (v.III.1), p. 208 [reads त्रयाणामपि वर्णानामपहार-वधबन्धन क्रिया। विवासनं धिक्करणं ब्राह्मणस्य]; मद०प्र०मद०(व्य०), p. 61 [om. सर्वत्र; 1 धनापहारवधबन्धनक्रिया विवासनाङ्करणे ब्राह्मणस्य; om. further]; (second time) [1 धनापहारवधबन्धन क्रिया विवासनाङ्करणं ब्राह्मणस्यं; om. further]; या०स्मृ०वा०, II.25, p. 39 [om. सर्वत्र; 1 धनापहारवधबन्धक्रिया; 3 न ब्राह्मणस्य; om. further]; (second time) [1 धनहारको वधबन्धक्रियारूपयोगो; 2 विवासकरणं]; वि०तां०क०, p. 86 [om. सर्वत्र; 1 धनापहारवधबन्धक्रियानिर्वासाङ्करणे ब्राह्मणस्य; om. further]; (second time) om. सर्वत्र; 1 धनापहारवधबन्धनं क्रिया; om. from प्राय० upto ब्राह्मण:]; वि०र०च०, p. 634; स्मृ०च०दे० (II), p. 124 [om. सर्वत्र; adds अपि after त्रयाणां; 1 धनापहारवधबन्धक्रिया; 2°करणे; om. from प्राय: upto ब्राह्मण:].

579. कृ०क०ल०, (XII), p. 778.

580. हि०लो०गं०, p. 481.



581. शङ्खलिखितौ शिल्पिनः कारवः शूद्रास्तेषां व्यभिचारेष्वपि[1] शिल्पोपकरणानि रक्षेत्।[2] तुलामान[3] प्रतिमान-समुत्थानि वणिक्पथानम्। क्षेत्रबीजभक्तगोशकट-कर्षणद्रव्याणि कर्षकाणाम्। वाद्यभाण्डालङ्कार-वासांसि रङ्गोपजीविनाम्। गृहशयनालङ्कारवासांसि वेश्यानाम्। शस्त्राणि[4] चायुधोपजीविनाम्।[5] सर्वेषां करणद्रव्याणि[6] नाऽहार्याणि राज्ञा धार्मिकेण।[7] अस्वा हि पुरुषाः पापबहुलाश्चाविधेयाश्च भवन्ति। तेभ्यः पापांशभाग्राजा। तस्मान्नाधनान्नानुपकरणान्कुर्यात्। तन्मूला हि वृत्तिः। वृत्तिमूलो[8] निवासः। तैर्निवसद्भिः स्फीतं राष्ट्रमित्युच्यते।

582. शङ्खलिखितौ चतुर्विंशतिरेकनवतिः प्रथम[1] साहसः। द्विशतः[2] पञ्चशतश्चेति मध्यमः। षट्शतः[3] साहस्रश्चेति[4] उत्तमः। यथा सारापकारं सर्वेषामानुपूर्व्येण।

[ दण्डप्रमाणम् ]

583. शङ्खः काकिन्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च।

[ प्रमाणबलाबलविचारः ]

584. शङ्खलिखितौ सामन्तविरोधे लेख्यप्रत्ययो[1] लेख्यविरोधे

---

581. कृ०क०ल०, (XII), p. 800 [2 adds राजा; 4 also सर्वास्त्राणि चायुधीयानाम्]; द०वि०व०, p. 60 [1 om. [अ] पि; 3 प्रतिमानानि; 5 om. [उ] प-; 6 कारुद्रव्याप्यनाहार्याणि]; ध०ल० (व्य०), p. 572 [8 adds भवति]; वि०र०च०, p. 656 [7 °णा हि; 8 as ध०ल०]; वि०से०वि०, p. 312 [6 कारणद्रव्याणि].

582. कृ०क०ल० (XII), p. 806 [2 चैव चोत्तमः] द०वि०व०, p. 22 [adds चेति before प्रथमः]; ध०ल०, p. 571 [2 द्विशतं पञ्चशतं चैव मध्यमसाहसः; 3 om. षट्शतः 4 om. इति]; वि०र०च०, p. 664 [as ध०ल०]; व्य०नि०व०, p. 404 [1 प्रथमः साहसः स्मृतः द्विशतं पञ्चशतं; 3 षट्छतं सहस्रं चेत्युत्तमः].

583. द०वि०वर्ध०, p. 54.

584. कृ०क०ल०, (XII). p. 444 [adds in the beginning गृहक्षेत्रयोः विरोधे

ग्रामनगरवृद्धश्रेणीप्रत्ययो[2] ग्रामनगर[3]श्रेणीविरोधे दशवर्षा[4] भुक्तिरन्यत्र राजविप्लवात्।

सामन्त प्रत्यय:; 1 अभिलेखप्रत्यय: अभिलेख्यविरोधे ग्राम:; 2 प्रत्यय:; 3 नगरवृद्धश्श्रेणी; 4 दशवर्षानुभुक्तमन्यत्र राजविप्रस्त्वात्]; ध०ल० (व्य०), p. 925 [गृहक्षेत्रयोर्विरोधे सामन्तप्रत्यय:; सामन्तविरोधे अभिलेखप्रत्यय:; अभिलेख्यविरोधे ग्रामनगरवृद्धश्रेणिप्रत्यय:; ग्रामनगरवृद्धश्रेणिविरोधे दशवर्षभुक्तानु- भुक्तमन्यत्र राजविप्रस्त्रात्]; मद०प्र०मद०, p. 270 [reads upto प्रत्यय:]; वी०मि०मि०मि०, p. 361, [as म०प्र०]; वि०र०च०, p. 208 [as कृ०क०ल०]; स्मृ०च०दे० (II), p. 233; हि०लो०गं०, p. 357 [1, 2, 3 as कृ०क०ल०; 4 दशवर्षभुक्तानुभुक्तम्। अन्यत्र राजविप्रस्वात्].

## साक्षिप्रकरणम्

### [ कूटसाक्षिण: ]

585. शङ्खलिखितौ मन्त्रिभि: शास्त्रसामर्थ्याद्दुष्टलक्षणं ग्राह्यम्। तिर्यक्प्रेक्षते समन्तादेवालोकयति अकस्मान्मूत्रपुरीषं विसृजति देशाद्देशं गच्छति पाणिना पाणिं पीडयति नखान्नितष्कृन्तति मुखमस्य विवर्णतामेति प्रस्विद्यति चास्य ललाटं चक्षुर्वाचं न प्रतिपूजयति अकस्माद्ददाति प्रशंसति पुन: पुन: अन्यमपनुदति बहिर्निरीक्षते शास्त्रं परामृशति। [ शोकमुपवर्णयति ] भूमिं विलखति शिर: प्रकम्पयति ओष्ठौ निर्भुजति सृक्किणी परिलेढि अविस्मित: कर्मसु महत्सु भ्रुवौ संहरति हसति तूष्णीं ध्यायति पूर्वापरविरुद्धं व्याहरति एवमादिदुष्टलक्षणम्। क्रुद्धस्य च स्वामिनोऽन्यत्र प्रकृतिशीलात्। तत्र राजमूला व्यवहारा:।

### [ साक्षिण: ]

586. शङ्खलिखितौ श्रोत्रियो गुणवान् रूपवान् माणवक: शीलवान् क्षत्रियस्तथा वैश्य: शूद्रो वा धर्मवांश्च य:[1] शीलोपपन्न: कर्मवादैर्विदितो[2] नत्वेक:।

587 शङ्खलिखितौ मौला: प्रतिष्ठिता: साक्ष्यर्थं विदितवन्त: कुलीना ऋत्विजो[1] जन्मत: कर्मतोऽर्थत: शुद्धा: पुत्रिण: सत्यवादिन: श्रौतस्मार्तक्रियायुक्ता: विगतद्वेषमत्सरा:

585. कृ०क०ल०, (XII), p. 139.

586. कृ०क०ल० (XII), p. 106 [2 कर्मप्रदानै]; ध०ल० (व्य०), p. 247 [1 वय: (for य:)].

587. ध०ल० (व्य०), p. 247, स०वि०9० (व्य०), p. 138, [1 ऋजव:; reads with variant upto प्रतिपद्यन्त]; व्य०मा०जी०, p. 335, [reads from कामं].

अप्रवासिनो युवानो लोभमोहविवर्जितास्त्र्यवरा नवसंख्याका न जातु कूटतां प्रतिपद्यन्ते कामं त्रयाणामेकोऽपि स्वपरिगृहीतः सर्वलोकसंमतः।

[ असाक्षिणः ]

588. शङ्खः पित्रा विवदमानो गुरुकुलवासी परिव्राजकवानप्रस्था[1] निर्ग्रन्थाश्चासाक्षिणः।[2]

589. शङ्खलिखितौ एकः साक्षी सर्वथा न ग्राह्यः।

590. शङ्खलिखितौ शुल्कगुल्माधिकृतौ दूतौ वेष्टितशिराः स्त्रियश्च[1] सर्वाः गुरुकुलवासिनः परिव्राजकवान[2]प्रस्थनिर्ग्रन्थशङ्खव्यालग्राहिणः।[3]

591. शङ्खःलिखितौ पितापुत्रयोर्विरोधे साक्षी न तिष्ठेत्। यस्तिष्ठेत्स दण्डयस्त्रीन्कार्षापणान्यश्चान्तरे तिष्ठेत् सोऽप्यष्टशतं दाप्यः।

[ साक्षिद्वैधे निर्णयः ]

592. शङ्खलिखितौ यदा तु साक्षिप्रश्नाज्जयपराजयावधारणे वृत्ते पराजितो वादी पूर्वेभ्योऽधिकगुणैः समसङ्ख्यैरेव समगुणैः पूर्वद्विगुणसङ्ख्यैरन्यथा ज्ञापयति तदा पूर्वनिर्णये त्वनिर्णयो भवति पूर्वसाक्षिणां कूटत्वावधारणात्।

---

588. ध०ल० (व्य०), p. 247; या०स्मृ०मि०, II. 68-69, p. 45; वी०मि०मि०मि० (व्य०), p. 113; स०वि०प्र० (व्य०), p. 140 [1 परिव्राजक; वानप्रस्थनिर्गन्धाअसाक्षिण:].

589. ध०ल०(व्य०), p. 247; व्य०चि०वाच०, p. 83 and p. 263; व्य०मा०जी०, p. 318.

590. कृ०क०ल०, (XII), p. 114. [also 3 निर्गन्ध]; ध०ल०(व्य०), p. 248 [2 °वनस्थ]; मद०प्र०मद०, p. 45 [3 निर्ग्रन्था:]; वी०मि०मि०मि० (व्य०), p. 119-120 [1 स्त्रियो गुरु; 3 °निर्ग्रन्था].

591. ध०ल० (व्य०), p. 1613; या०स्मृ०अ०, II. 239, p. 824; हि०लो०गं०, p. 525.

592. व्य०मा०जी०, p. 335.

## दिव्यप्रकरण्

[ दिव्यप्रकाराः ]

593. शङ्खलिखितौ असाक्षिप्राणिहिते दिव्यम्। अथवा मित्रैः सज्जनैरात्मानं वा शोधयेदेव। स चेद्दण्ड्योऽर्थिनां चार्थं दापयेत्।

594. शङ्खलिखितौ असाक्षिप्राणिहिते पुरुषप्रत्ययः शासनं भेदनं ताडनम्। संन्यस्ते वा विवादे वा दैवं वा कोषविषभक्षणशस्त्रजलम्।

595. शङ्खः तत्र दिव्यं नाम तुलाधारणं[1] विषाशनमप्सु[2] प्रवेशो लोहधारणमिष्टापूर्तप्रदानमन्यांश्च[3] शपथान् कारयेत्।

[ उदकदिव्यम् ]

596. शङ्खलिखितौ नाभिप्रमाणोदकस्थो यज्ञियवृक्षोद्भवां धर्मस्थूणामवष्टभ्य प्राङ्मुखस्तिष्ठेत्।

597. शङ्खलिखितौ सदसच्च त्वमेव वरुण उभयोः प्रतिष्ठितः।[1] त्वयि सत्यं त्विद[2] देव वरुण त्वमेव तद्ब्रूहि वरेण्य[3] तदादिशस्व।[4]

---

593. ध०ल०(व्य०), p. 444 [वा (for ना).] and p. 1672; या०स्मृ०अ०, II.269, p. 842.

594. कृ०क०ल०, (XII), p. 197; ध०ल०, (व्य०), p. 444.

595. कृ०क०ल० (XII), p. 256; ध०ल० (व्य०), p. 444 [1 तुलारोहणं]; प०सं०मा० (v.III.1), p. 150 [2 अग्नि-(for अप्सु-).]; & p. 151; या०स्मृ०अ०, II. 95, p. 694 [om. तत्र]; वी०मि०मि०मि० (व्य०), p. 170 [3 पूर्वदान °]; व्य०चि०वाच०, p. 146 & p. 691; व्य०नि०व०, p. 140 [1 अपां (for अप्सु).]; स्मृ०च०दे०, p. 96 [reads from इष्टापूर्त.].

596. ध०ल० (व्य०), p. 499; स०वि०प्र०, p. 202.

597. कृ०क०ल०, (XII), p. 238 [3 वरेण्यं]; ध०ल० (व्य०), p. 499; मद०प्र०मद० (व्य०), p. 113 [1 प्रतिष्ठित:; 4 °दिशस्त्य]; वि०तां०क०, p. 249 [1 प्रतिष्ठितस्त्थम्; 2 om. तु; 4 °यशस्य]; वी०मि०मि०मि० (व्य०), p. 206 [3 वरेण्यं].

**[ लोहधारणदिव्यम् ]**

598. शङ्खलिखितौ अथ वा[1] सप्ताश्वत्थपर्णान्तरितं[2] षोडशपलमग्निवर्णं[3] लोहपिण्डमञ्जलिनादाय सप्तमर्यादां गच्छेत्।

**[ शपथविधिः ]**

599. शङ्खलिखितौ साक्षिणः सुवर्णरजत[1]रत्नगोधान्यसूर्याग्निगजस्कन्धाश्वपृष्ठरथोपस्थशस्त्रा[2]दिभिस्तथा पुत्रपौत्रैः।[3] यथावर्णं परिग्रहविशेषतः[4] स्यात् देवब्राह्मणस्वामिनामग्रतः।

600. शङ्खः प्राड्विवाको नृपो वापि[1] समवेतान् पृथक्पृथक्।

**[ संभूयसमुत्थानप्रकरणम् ]**

601. शङ्खः तत्र[1] चेदनुप्राप्ते[2] सवने ऋत्विङ्म्रियेत तस्य सगोत्रोऽथ[3] शिष्यो वा[4] तत्कार्यमनुपूरयेत् अथ चेदबान्धवस्ततोऽन्यमृत्विजं वृणुयात्।

---

598. कृ०क०ल०, (XII), p. 230, [also om. वा]; ध०ल० (व्य०), p. 486 [1 om वा०]; मद०प्र०मद०(व्य०), p. 104 [2 पत्र (for पर्ण); 4 °मर्यादं]; वि०तां०क०, p. 236 [begins from षोडश]; वी०मि०मि०मि० (व्य०), p. 196 [2 पत्र (for पर्ण); 3 adds अपि before अग्नि-; 4 सप्तपदमर्यादां]; स्मृ०च०दे०, (II), p. 112 [om. वा].

599. कृ०क०ल०, (XII), p. 130; ध०ल० (व्य०), p. 247 [3 पुत्रपौत्राद्यैः]; व्य०चि०वाच०, p. 96 and p. 356-357 [2 om. रत्न; 4 विशेषः]; व्य०नि०व०, p. 116. [2 om. शस्त्रादि; 4 विशेषः विशेषसमान्; 5 अग्रे].

600. ध०ल०(व्य०, p. 247 [1 [अ] थ (for [अ] पि); om. from शपथ to शेषः]; व्य०नि०व०, p. 115.

601. कृ०क०ल० (XII), p. 363; ध०ल०, p. 771 [3 om. अथ] मद०प्र०मद० (व्य०), p. 224 [4 अथ (for वा)]. वि०तां०क०, p. 593 [1 अथ (for तत्र); 2 om. प्राप्ते सवने; 3 अपि (for अथ)];वी०मि०मि०मि० (व्य०), p. 303 [1 अथ (for तत्र); 4 om. वा]; स०वि.प्र०, p. 275 [2 अनुप्रवृत्ते; 3 om. अथ]; स्मृ०च०दे० (II), p. 188; स्मृ०त०र० (II), p. 328 [as ध०ल०]; हि०लो०गं०, p. 263 [as ध०ल०].



602. शङ्खलिखितौ अथ [1]ऋत्विजि वृत्ते पश्चादन्यं वृणुयात्। पूर्वाहूतस्यैव[2] दक्षिणा। पश्चादाहूतः[3] किञ्चिल्लभेत।[4] प्रवसेच्चेत् कालं निमित्तं चा(वा)पेक्ष्य[6] यक्ष्यमाण[6]स्तत्कालमुदीक्षेत्। नान्तरा[7] यजेत्। स्यादात्ययिको वा। तं क्रतुं समापयेत्।[8] प्रोष्य प्रत्यागतश्च[9] किञ्चिल्लभेत्। अथ चेत्प्रतिषिद्धः[10] प्रवसेत्कामादनुप्राप्ते सवने[11] ऋत्विक्छतं दण्ड्यः। स एव [12]चादुष्टस्तस्य ऋत्विक्कुलोपाध्यायः।[13] एवं व्याधितपतितोन्मत्तप्रहीणप्रध्वस्तेषु संप्रसादकरण[14]मृत्विक्षु। कामाच्चेदपतितं याज्यं त्यजेदृत्विक् प्राप्नुयाद् द्विशतं दण्डम्।[15] याज्यश्चैवं तदेवाप्नुयात्त्यागे ऋत्विजोऽपतितस्य। कामं पतितमश्रोत्रियं त्यजेद्याज्यं चाभिशस्तमदातारम्।

603. शङ्खः अन्तेवासी ऋत्विग्वा।

---

602. कृ०क०ल०, (XII), p. 366 [8 also सम्पादयेत्; 4 also लभेत्]; ध०ल० (व्य०), p. 771 [3 पश्चाद्धृतः; 12 वा (for च); 15 दण्डम्]; या०स्मृ०मि०, II.265, p. 839 [1 अथर्त्विजि; 2 पूर्ववृत्तस्थैव दक्षिणायाः पश्चादाहृतः किंचिल्लभते; 5 चावेक्षमाणस्तं कालमपेक्षेत्; 8 सम्पादयेत्; 11 प्राप्तः 14 [अ] संप्रदानकरणमृत्विक्षु; 15 दण्डम् याज्यश्चेत्त्यजेत्]; या०स्मृ०वी०मि०, II.265, p. 718 [2 पूर्ववृत्तस्यैव; 3 धृतः (for [आ] हुतः); 5 चापेक्ष्यमाणस्तं; 7 नान्तरायं यजेत्। तस्मादत्यधिका वा; 10 प्रसिद्धः; 11 सघनं; reads upto दण्ड्यः]; वी. चि०वाच०, p. 50 [3, 7, 8, as या०स्मृ०वी०मि०, 9 om. च; 12 वा दुष्टः स्यात्; 13 adds तदुपनायकः; 14 संप्रमादात्प्रसाद्य ऋत्विक्षु]; वी०मि०मि०मि० (व्य०), p. 303 [as कृ०क०ल०]; वी०र०च०, p. 120 [3 धृतः (for [आ] हुतः).; 6 om. यक्ष्य- 15 दण्डम्].

603. या०स्मृ०बा०, II.135, p. 215 [ऋत्विग्व्याहरेत्]; & p. 224.

# स्वामिपालविवादप्रकरणम्

### [ गवादिभिः परसस्यादिभक्षणे दण्डः ]

604. शङ्खलिखितौ रात्रौ चरन्ती[1] गौः पञ्चमाषान् दिवा[2] त्रीन्मुहूर्ते माषं[3] ग्रासे त्वदण्डः।[4]

605. शङ्खलिखितौ सर्वेषामेव वत्सानां[1] माषं महिषी दश खरोष्ट्रं[2] षोडश अजाविकं चतुरः।

### [ अदण्ड्याः पशवः ]

606. शङ्खः छागवृषभा अनिर्दशाहा गावः सस्यापराधे न दण्डमाप्नुयुः।

607. शङ्खलिखितौ क्षुद्रपशवः सर्वथानिवार्याः। अश्वतरगजवाजिनश्चा-दण्ड्याः[1] अवश्याः शनैरपवार्याः।

---

604. कृ०क०ल० (XII), p. 464 [4 त्वदण्डमः]; द०वि०व०, p. 284 [2 द्वि (त्री) रात्रीन्]; ध०ल० (व्य०), p. 905; प०सं०मा०, (v.III.1), p. 382 [4 दण्डं ग्रासं]; मद०प्र०मद०, p. 259; या०स्मृ०अ०, II. 160, p. 769 [1 चरतां]; वि. चि०वाच०, p. 104 [4 ग्रामे त्वदण्ड्याः]; वि०तां०क०, p. 677 [3 om. माषं]; वि०र०च०, p. 235; वि०से०वि०, p. 198; वी०मि०मि०मि०(व्य०), p. 351; स्मृच०दे०, II, p. 212.

605. कृ०क०ल० (XII), p. 465 [2 दशाजाविकं]; द०वि०व०, p. 283 [2 खरोष्ट्रौ सर्वेषां पशूनाम्]; ध०ल० (व्य०), p. 905; या०स्मृ०अ०, II. 160, p. 769 [1 वत्सो; 2 खरोष्ट्रौ]; वि०चि०वाच०, p. 105 [reads upto माषं only]; वि०र०च०, p. 235; वि०से०वि०, p. 198-199 [1 माषः 1 सर्वेषां पशूनां वत्सः प्रथमवयाः]; स्मृ०च०दे० (II), p. 211 [om. सर्वेषामेव].

606. कृ०क०ल० (XII), p. 468 [अवश्याश्च]; ध०ल० (व्य०), p. 905 [शस्यापबाधे; दण्डमवाप्नुयुः]; वि०र०च०, p. 240 [as ध०ल०].

607. कृ०क०ल० (XII), p. 469 [अवश्याश्च]; ध०ल०(व्य०), p. 905; मद०प्र०मद०(व्य०), p. 261 [om. upto °निवार्याः; अवश्यं च]; वि०चि०वाच०,



### [ वृत्तिकरणप्रकाराः ]

608. शङ्खलिखितौ मार्गक्षेत्रे वृत्तिः कार्या यामृष्टो नावलोकयेत्। नाश्वशूकरावन्तरं विन्देताम्।

---

p. 108 [क्षुद्रपशवोऽवश्याश्वतरगजवाजिनश्च]; वि०र०च०, p. 241; वि०से०वि०,
p. 108 [क्षुद्रपशवोऽवश्याश्वतरगजवाजिनश्च]; वि०र०च०, p. 241; वि०से०वि०,
p. 201 [1 अवश्याश्च.....दण्ड्या].

608. कृ०क०ल० (XII), p. 463 [om. from नाश्व onwards]; ध०ल० (व्य०), p. 905; वि०र०च०, p. 233.

## सीमाविवादप्रकरणम्

### [ सीमाभेदे दण्डः ]

609. शङ्खलिखितौ क्षेत्रमर्यादाभेदेऽष्टशतम्।[1]

610. शङ्खलिखितौ सीमातिक्रमणेऽष्टसहस्रम्। क्षेत्रोदकाहरणेऽष्टशतम्।[1]

611. शङ्खः सीमाभेत्तारमुत्तमसाहसं दण्डयित्वा पुनः सीमां कारयेत्।

### [ क्षेत्रादिषु विसर्गमर्यादा ]

612. शङ्खलिखितौ मार्गक्षेत्रे पथि विसर्गे राजमार्गो रथपरिवर्तनं पूर्वमर्यादास्थापनं तोरणगृहरथ्यान्तरेषु त्रिपदं देवराजायतनेषु यथेष्टम्।

---

609. कृ०क०ल०, (XII), p. 456; ध०ल०(व्य०), p. 926; वि०चि०वाच०, p. 100; वि०तां०क०, p. 708; वि०र०च०, p. 223; वि०से०वि०, p. 193; स्मृ०च०दे० (II), p. 236; हि०लो०ग०, p. 364; [1 अष्टसहस्रम्].

610. कृ०क०ल० (XII), p. 456 [सीमाव्यतिक्रमे; 1 [अ]पहरणे]; ध०ल०(व्य०), p. 926; प०सं०मा० (v.III.11), p. 404 [व्यतिक्रमे adds तु before अष्ट; om. from क्षेत्रो upto शतम्]; मद०प्र०मद०(व्य०), p. 275 [as प०सं०मा०]; & p. 278 [from क्षेत्रोदकापहरणे]; वि०चि०वा० p. 100 [° व्यतिक्रमे]; वि०ता०क०, p. 708 [adds तु before अष्ट]; वी०मि०मि०मि०(व्य०), p. 366 [as वि०तां०; om. from क्षेत्रो to शतम्]; वि०र०च०, p. 223; वि०से०वि०, p. 94; स्मृ०च०दे०, (II), p. 236 [-व्यतिक्रमेऽष्टसाहस्रम्। क्षेत्रोदकापहरणे]; हि०लो०मं०, p. 364-365.

611. व्य०नि०व०, p. 374; व्य०मा०, p. 62.

612. कृ०क०ल० (XII), p. 454; ध०ल० (व्य०), p. 926; मद०प्र०मद०(व्य०), p. 274 [रथस्य परिवर्तनम्; om. onwards]; वि०तां०क०, p. 705 [as म०प्र०]; वि०र०च०, p. 220; वी०मि०मि०मि० (व्य०), p. 365. [as म०प्र०]; स्मृ०च०दे० (II), p. 235. [only upto विसर्ग]; हि०लो०गं०, p. 362.



## स्वामिविक्रयप्रकरणम्

### [ अस्वामिविक्रयः ]

613. शङ्खः अनात्मीयस्य विक्रेता गृहक्षेत्रादिकस्य तु।
क्षेत्रे तत्सदृशं दद्यात् मूल्यं वा क्रतुरिच्छया॥

### [ दत्ताप्रदानिकप्रकरणम् ]

614. शङ्खलिखितौ गृह्णात्यदत्तं यो मोहाद्यश्चादेयं प्रयच्छति।
दण्डनीयावुभावेतौ धर्मज्ञेन महीभुजा॥

---

613. ध०ल०(व्य०), p. 757; व्य०नि०व०, p. 277.

614. स०वि०प्र०, p. 281.

## वाक्पारुष्यप्रकरणम्

615. शङ्खलिखितौ यथाकालमुत्तमवर्णाक्षेपे तत्प्रसादो दण्डस्त्रयो वा कार्षापणाः। शुक्तवाक्याभिधानेऽप्येवमेव।[1] तथा सवर्णव्यतिक्रमे[2] द्वादश कार्षापणाः। यथारूपविशिष्टाक्षेपे विशिष्टस्य चतुर्विंशतिः। अविशिष्टातिक्रमे[3] विशिष्टस्य ततोऽर्धम्।

616. शङ्खलिखितौ तथाधिकृतान्वि[1]प्रान्गुरूंश्च[2] निर्भर्त्स्य मुण्डनं[3] ताडनं गोमयालेपनं[4] स्वरारोहणं दर्पहरो[5] दण्डो वा।

617. शङ्खलिखितौ आक्रोशे ब्राह्मणस्य क्षत्रियः[1] शतं[2] दण्ड्यः।[3] शतार्धं वैश्यस्य पञ्चविंशतिः शूद्रस्य॥

### [ दण्डपारुष्यप्रकरणम् ]

618. शङ्खलिखितौ प्रहारोद्यमे षट्पञ्चाशत्। निपातने तद्द्विगुणम्।

---

615. कृ०क०ल०, (XII), p. 476 [reads upto °मेव]; ध०ल०(व्य०), p. 1771 [om. तथा]; या०स्मृ०अ०, II.204, p. 807 [begins from सवर्णव्यतिक्रमे]; वी०मि०मि०मि० (व्य०), p. 380 [2 समवर्ण °3 अवशिष्टस्याति]; हि०लो०गं०, p. 381.

616. कृ०क०ल०, (XII), p. 477 [2 also निर्वासनं; 5 also द्रव्यहरो]; द०वि०व०, p. 52 [अधिकृतगुरुविप्राणामाक्रोशे निर्भ०; 3 om. मुण्डनं]; & p. 212 [1 transt. विप्रान् and गुरून्; 3 om. मुण्डनं; 4 गोगयाप्रलेपनं]; ध०ल०(व्य०), p. 1771 [4 वा गोमयानुलेपनं]; या०स्मृ०अ०, II.205, p. 807 [2 निर्भर्त्स्यतां]; वी०मि०मि०मि०, p. 382 [2 निर्वासनं; 4 चानुलेपनं]; हि०लो०गं०, p. 386 [adds क्रोशतः in the beginning; 1 transp. विप्रान् and गुरून्; 4 चानुलेपनं].

617. कृ०क०ल० (XII), p. 478; द०वि०व०, p. 205 [1 क्षत्रियस्य; 3 दण्डः]; ध०ल० (व्य०), p. 1771 [2 पणशतं]; वि०र०च०, p. 251 [ब्राह्मणः क्षत्रियस्य]; वी०मि०मि०मि० (व्य०), p. 381 [as ध०ल०]; हि०लो०गं०, p. 383 [ब्राह्मणः क्षत्रियस्य].

618. कृ०क०ल०, (XII), p. 487; ध०ल० (व्य०), p. 1798; वि०र०च०, p. 263; वि०से०वि०, p. 217; हि०लो०गं०, p. 396.

## स्तेयप्रकरणम्

### [ कूटशासनप्रयोगेषु दण्डाः ]

619. शङ्खलिखितौ कूटशासनप्रयोगे[1] राजशासनप्रतिषेधे[2] कूटतुलामान-[3]प्रतिमानव्यवहारे[4] शारीरोऽङ्गच्छेदो वा।

### [ स्तेनस्य राज्ञि किल्बिषप्रमार्जनम् ]

620. शङ्खलिखितौ अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्यापचारिणी। गुरौ शिष्यश्च याज्यश्च स्तेनो राजानि किल्बिषम्॥

### [ सुवर्णरत्नापहरणादिषु दण्डः ]

621. शङ्खलिखितौ प्रतिषिद्धभाण्डनिर्हारे सुवर्णरत्नापहरणे वापीतडागोदपानभेदमार्गरसद्रव्यदूषणेऽदासीदाससम्प्रदानकरणे शारीरोऽङ्गच्छेदो वा।

---

619. कृ०क०ल०, (XII), p. 515 [om. upto प्रतिषेध]; & p. 570; द०वि०व०, p. 90 [as कृ०क०ल०, p. 515]; ध०ल०(व्य०), p. 1613 and p. 1671 [as कृ०क०ल०, p. 515]; या०स्मृ०अ०, II.294, p. 862; वि०चि०वाच०, p. 127 [as कृ०क०ल०, p. 515]; and p. 162; वि०र०च०, p. 298 [as कृ०क०ल०, p. 515]; & p. 369; वि०से०वि०, p. 230 [as कृ०क०ल०, p. 515]; & p. 307 [3 om. प्रतिमान; adds च after व्यवहारे]; व्य०नि०व०, p. 504 [1 -प्रयोग; 2 °षेधकूट°; 4 व्यवहारेण; om. further]; & p. 518 [2 प्रतिक्षेपे]; हि०लो०गं०, p. 429 [as कृ०क०ल०, p. 515]; & p. 535 [2 प्रतिक्षेपे].

62०. ध०ल०(व्य०), p. 1672.

621. कृ०क०ल० (XII), p. 516 [only सुवर्णरत्नापहरणे शारीरोङ्गच्छेदो वा]; & p. 533 [only प्रतिषिद्धभाण्डनिर्हारे शारीरोङ्गच्छेदो वा]; & p. 566 [reads from वापी to करणे]; द०वि०व०, p. 73 [om. from सुवर्ण to करणे;

622. शङ्खलिखितौ स्कन्धवाह्येष्वशुल्को नगरवासिनां विप्रेतराणामपि।

623. शङ्खलिखितौ तुलामानप्रतीमानव्यवहारार्धसंस्थापनं[1] देशद्रव्यानुरूपं प्रत्यचित्तपुरुषाधिष्ठितम्।

624. शङ्खः शारीरस्त्ववरोधादिजीवितान्तस्तथैव च।

[ राजपुत्रापहारादिषु दण्डः ]

625. शङ्खलिखितौ राजपुत्रापहारेऽष्टसहस्त्रं[1] शारीरो वा दण्डस्तत्कुलीनेषु पुत्रेष्वर्धं[2] स्त्रीपुंसयोश्च।

[ हस्त्यश्वादिहरणे दण्डः ]

626. शङ्खलिखितौ हस्त्यश्वरथगोवृषयानेषु[1] राजपुत्रापहारवद्दण्डः। अजाविकेष्वर्धत्रयोदशपणा नकुलबिडालापहरणे त्रयः कार्षापणाः।[2]

---

adds भवेत् at the end].; & p. 92 [only upto निर्हरि]; p. 145; p. 313; p. 315 & p. 317 [only शारी.....to वा]; ध०ल०, p. 1613 [reads from वापी० to करणे]; या०स्मृ०वी०मि०मि०मि०, II. 273, p. 727 [as ध०ल०; कूपतडागोदपान]; वि०चि०वाच०, p. 158 [as ध०ल०]; वि०से०वि०, p. 306 [as ध०ल०; कूपतडागो°; om भेद]; हि०लो०गं०, p. 443 [as कृ०क०ल०, p. 533]; p. 455 [as कृ०क०ल०, p. 533]; p. 531 [as ध०ल०].

622. द०वि०व०, p. 96.

623. क०क०ल०, (XII), p. 519 [adds at the end in brackets राज्ञा कार्यम्]; द०वि०व०, p. 97 [1 om. सं from संस्थापनं]; ध०ल० (व्य०), p. 1671; वि०र०च०, p. 302; हि०लो०गं०, p. 443 [as कृ०क०ल०].

624. द०वि०व०, p. 54.

625. कृ०क०ल०, (XII), p. 529 [1 हारेषु सहस्र; 2 om. पुत्रेषु स्त्रीपुरुषयोश्च]; द०वि०व०, p. 127 & p. 151 [both स्त्रीपुरुषयो:]; ध०ल०(व्य०), p. 1671; वि०र०च०, p. 318; हि०लो०गं०, p. 449 [2 om. पुत्रेषु].

626. कृ०क०ल०, (XII), p. 529 [1 transp. रथ and गो०, om. from अजा°]; द०वि०व०, p. 130 [1 om. रथ]; cont. on p. 132 [अजाविकेऽर्ध]; ध०ल० (व्य०), p. 1672 [2 om. त्रय:]; शूद्र०क०कं०, p. 68 [reads हस्त्यश्वसारथ्यवर्धनपोषणदमनादि]; हि०लो०गं०, p. 449.



627. शङ्खलिखितौ अष्टशतं सीताद्रव्यापहरणो[1] यथाकालम्।

628. शङ्खलिखितौ कृतकाष्टाश्मकौलालचर्मवेत्रदल[1]भाण्डेषु मूल्यात् पञ्चगुणः त्रयो वा कार्षापणाः। एकचक्रापहरणे चत्वारिंशत् शकटे त्वशीतिशतम्॥[2]

[ अब्राह्मणेन ब्राह्मणस्य समिधादिहरणे दण्डः ]

629. शङ्खलिखितौ अब्राह्मणो[1] ब्राह्मणस्य समिदाज्येध्माग्निकाष्ट[2]-तृणोपलपुष्पफल[3]मूलान्यपहरत्वबलादविज्ञातो वा हस्तच्छेदनमाप्नुयात्।[4] [5]कुशकरकाग्निहोत्रद्रव्यापहारे [6]प्रत्यक्षतोऽङ्गच्छेदः स्यात् अप्रत्यक्षं यथा[7] विदितोऽयं किल्बिषीति ब्राह्मणः खरयानमवाप्नुयात्[8]। मूत्रमौण्ड्यमितरेषां खरयानमेव।

---

627. कृ०क०ल० (XII), p. 534 [1 °पहारे च; om. यथाकालम्]; द०वि०व०, p. 145 [1°पहारे]; ध०ल०(व्य०), p. 1672; वि०चि०वाच०, p. 139 [1 [अ]भिहरणे & adds कृषिसमयेऽपहरन्नष्टाधिकं शतं दण्ड्य:]; वि०र०च०, p. 324; वि०से०वि०, p. 241 [1 [अ]धिहरणे]; हि०लो०गं०, p. 455 [om. यथाकालम्].

628. कृ०क०ल०, (XII), p. 536 [1 विदल- (for -वेत्रदल-); 2 त्वशीतितम्]; द०वि०व०, p. 147; ध०ल०(व्य०), p. 1672; वि०र०च०, p. 327; वि०से०वि०, p. 242 [1 om. दल-]; हि०लो०गं०, p. 458.

629. कृ०क०ल० (XII), p. 460 [1 ब्राह्मणो; 6 [अ]पहरत:; 7 यदा; 8 आप्नुयात् (for अवाप्नु °).]; द०वि०व०, p. 150 [3 मूलाद्यपहरनवा बलादविज्ञानतो; 8 as कृ०क०ल०]; ध०ल०, p. 1672 [2 तृणोलपुष्प; adds च at the end]; या०स्मृ०अ०, II. 275, p. 848 [2 तृणोलपशष्पपुष्पधूपकलान्यपहरेत्; 5 कुशचर्मभाण्डं करं; 6 [अ]पहरत:; 7 यदा 8 यानमाप्नुयात्]; वि०चि०वाच०, p. 143 [reads only ब्राह्मणस्य तु मौण्डममितरेषां खरयानमेव]; वि०र०च०, p. 329 [adds च at the end]; वि०से०वि०, p. 242 [2 तृणपुष्पफल-मूल्यान्यपहरन्]; हि०लो०गं०, p. 460 [4 छेदनमर्हति; om. from कुश upto °प्नुयात्; ब्राह्मणस्य तु मौण्ड्यमितरेषां; om. एव].

### [ पथिकानां न दोषः ]

630. शङ्खलिखितौ तिलमुद्गमाष[1]यवगोधूमादीनां[2] सस्य[3]मुष्टिग्रहणेषु न[4] दोषः पथिकानाम्।

631. शङ्खः अप्यपथ्यदलानां तथेक्षोमूलकयोः पुष्पफलप्रचायने[1] च विदितस्य प्रकाशं गृह्णतो न दोषः।

630. कृ०क०ल०, (II), p. 323 [4 अदोषः (for न°)]; गृ०र०च०, p. 520 [1 मसुर; 2°दीमानां; 3 °मुष्टि-; 4 om. न दोषः]; स्मृ०च०दे०, (I), p. 176.

631. कृ०क०ल० (II), p. 323 [1 शाकपुष्पफलप्रचायने च]; गृ०र०च०, p. 520.

## साहसप्रकरणम्

### [ साहसलक्षणम् ]

632. शङ्खलिखितौ चौर्यपारुष्यहिंसाः साहसपदवाच्याः।

### [ साहसप्रकाराः ]

633. शङ्खलिखितौ अनिवेदितप्रवेशे[1] तत्रोत्तममुत्तमायाम्। विपर्यये मध्यमसाहसम्। प्रतिलोमैकान्तरावस्कन्दने[2] सर्वस्वं वधो वा। विपर्यये सन्निरोधः सर्वस्वं वा।

### [ पुत्रादित्यागे दण्डः ]

634. शङ्खः पुत्रादीन् यस्त्यजेत्कामात्स द्विशतं दण्डं प्राप्नुयात्।

### [ मातापित्राद्यतिक्रमे दण्डः ]

635. शङ्खलिखितौ न मातापितरावतिक्रामेन् न गुरुम्। त्रयाणां व्यतिक्रमादङ्गच्छेदः।

### [ प्रतिमारामादिभङ्गे दण्डः ]

636. शङ्खलिखितौ प्रतिमाराम[1]कूप[2]संक्रमध्वजसेतुनिपानभङ्गेषु।[3] तत्समुत्थापनं[4] प्रतिसंस्कारोऽष्टशतं च।[5]

632. ध०ल०(व्य०), p. 1612; स०वि०प्र०, p. 452.

633. कृ०क०ल०, (XII), p. 586 [1 also स्त्रीप्रवेशे; also प्रवेशे स्त्री; adds स्त्रीगृहेषु after प्रवेसे; 2 reads as प्रतिलोम एकावस्कन्दने सर्वस्वं वा]; ध०ल०(व्य०), p. 1847; वि०र०च०, p. 390; हि०लो०गं०, p. 483.

634. वि०चि०वाच०, p. 154; वि०से०वि०, p. 304.

635. हि०लो०गं०, p. 523.

636. कृ०क०ल० (XII), p. 566 [3 adds द्विजायतन before भङ्गेषु; 4 समुपस्थापनं;

### [ रुधिरस्रावे दण्डः ]

637. शङ्खलिखितौ केशाकेशिग्रहणात्[1] पारजायिकः उल्काहस्तोऽग्निदः। शस्त्रपाणिर्घातकः[2]। लोप्त्रहस्तश्चोरः। क्षेपेऽष्टशतं यथानुरूपं[3] वा। रुधिरस्रावे प्रहारैश्चाभिव्यक्ते[4] न साक्षिणः। प्रत्यक्षलिङ्गाभिव्यक्ते[5] चाष्टशतम्।

### [ साहसविशेषे दण्डः ]

638. शङ्खलिखितौ सर्वेषां स्वदारनियमः स्वकर्मप्रतिपत्तिश्च[1] धर्मः।[2] येन[3] येनागेनापराधं कुर्यात्तत्तदस्य[4] छेत्तव्यमष्टसहस्रं[5] वा दण्डः। अन्यत्र[6] ब्राह्मणात्। अदण्ड्यो हि ब्राह्मणः।

---

5 adds दमं before च]; द०वि०व०, p. 312 [5 adds दण्डः after च]; ध०ल०, p. 1613; नि०सि०क०, p. 251 [3 निपातभङ्गेषु; 4 समुत्थानं; adds निपातितानाम् at the end; पूर्त०क०क०, fol. 83 [adds निपातितानाम् at the end.]; पूर्व०प्र०रु० fol. 9 [4 °त्थानं; 5 चेत् परिमाणम्]; प्र०ना०रु० fol. 9 [5 शतं चेत्पणपरिमाणम्]; प्रा०म०नी०, p. 125 [2 संक्रमण; 3 निपातभङ्गेषु]; वि०चि०वाच०, p. 158 [1 आरामप्रतिमाकूप °; 4 समुत्थान]; वि०र०च०, p. 364; व्य०नि०च०, p. 510 [also adds दाराणां before प्रति; 5 अष्टदशशतं च]; हि०लौ०गं०, p. 530.

637. कृ०क०ल०, (XII), p. 195-196; मद०प्र०मद०, p. 78 [reads upto श्चौरः]; ध०ल०(व्य०), p. 425 [1 संग्रहणात् पारजायिकः; 2 धातुकः; 3-स्वरूपं; 4 प्रवाहे; 5 चिह्न (for लिङ्ग).]; प०सं०मा०, (v.II.1), p. 118, [upto श्चौरः]; वी०मि०मि०मि०, p. 168 [upto श्चौरः]; व्य०चि०वाच०, p. 129 & p. 536; स्मृ०च०दे० (II), p. 95 [1 & 2 as ध०ल०; reads upto श्चौरः].

638. कृ०क०ल० (XII), p. 583 [4 तदेवास्य] द०वि०व०, p. 151 [1 स्वकार्य; 4 तदेवास्य; 6 अन्यत्रैव]; ध०ल० (व्य०), p. 1847 [om. धर्मः; 4 तत्तस्य]; मद०प्र०मद०, p. 312, [om. धर्मः; 3 om. येन; 5 om. अष्टसहस्रं वा दण्डः]; वि०ता०क०, p. 806 [begins from येन; 5 om. छेत्तव्यमन्यत्र ब्राह्मणान्; om. अदण्डयो हि ब्राह्मणः]; वि०र०च० [as ध०ल०]; वि०से०वि०, p. 263 [begins from येन; 4 तत्तस्य]; व्य०म०नी०, p. 107; [as वि०ता०].



639. शङ्खलिखितौ अन्यूनभावे वैश्यवत् शूद्रस्य कल्प्यम्।

640. शङ्खः गुणस्य हेतुत्वे तु पीतः।

641. शङ्खः श्रेयसः शयनशायिनं राजा बद्ध्वा श्वभिः खादयेत् काष्ठैश्चैनं दहेत्।

---

639. गो०ध०सू०, p. 221; ध०ल० (व्य०), p. 1672.

640. ध०द०दे०, p. 25.

641. वि०र०, p. 396.

# स्त्रीसंग्रहप्रकरणम्

## [ कन्यादूषणम् ]

642. शङ्खलिखितौ कन्यायामसकामायां द्व्यङ्गुलच्छेदो दण्डश्चो[1]त्तमायां वधो जघन्यस्य सभायां[2] शुल्कमाभरणं द्विगुणं[3] च स्त्रीधनं दत्त्वा प्रतिपद्येत[4] स्वकन्याम्।[5]

643. शङ्खलिखितौ अनुलोमासु दूषणे तदङ्गच्छेदः। उत्तमासु वधः।

644. शङ्खः प्रातिलोम्ये वधः पुंसां स्त्रीणां नासादिकर्तनम्।

645. शङ्खलिखितौ अबुद्धिपूर्वमलंकृतो युवा परदारमनुप्रविशन्कुमारीं वाऽवाच्यः। बुद्धिपूर्वं तु दुष्टभावो दण्ड्यः।

646. शङ्खलिखितौ या स्त्री योन्यङ्गुलिप्रवेशेन कन्यां दूषयेत् तां शिरसो मुण्डनं कृत्वा गर्दभेन राजमार्गे गमनं कारयेत्।

647. शङ्खलिखितौ क्षत्रियवैश्ययोरन्योन्यस्त्र्याभिगमने दण्ड्यावुभौ।

---

642. कृ०क०ल० (XII), p. 596 [2 समानायां]; ध०ल०(व्य), p. 1848 [1 om. च; 5 om. स्वकन्याम्]; या०स्मृ०अ० II.248, p. 859 [2 adds सकामायां च after सभायां]; या०स्मृ०वी०मि०मि०मि०, II.249, p. 937 [begins from समा for सभायां]; वि०चि०वाच०, p. 176 [om. upto जघनस्य; 2 समां; 4 प्रतिपद्यते; 5 om. स्वकन्याम्]; वि०र०च० p. 402 [1 om. च; 3 reads as द्विगुणं स्त्रीधनं प्रतिपाद्यते]; वि०से०वि०, p. 275 [as वि०चि०; 5 as in text]; हि०लो०गं०, p. 496 [1 om. च; 3 च द्विगुणं (by transp.); 5 om. स्वकन्याम्].

643. स०वि०प्र०, p. 472.

644. प्रा०प्र०भ०, p. 93; प्रा०वि०शू०, p. 354.

645. या०स्मृ०अ०, II. 284, p. 848.

646. ध०ल० (व्य०), p. 1848.

647. ध०ल०(व्य०), p. 1848.

# दायभागप्रकरणम्

## [ पुत्रप्रशंसा ]

648. शङ्खलिखितौ ब्राह्मणस्तु सवर्णायाः पाणिं गृह्णीयात्। तस्यां[1] हि पितामहानां तनवोऽनुसूयन्ते। पुत्रोपचारेणात्मानमनुमन्त्रयते।[2] एवं ह्याह

अङ्गादङ्गात्संभवसि हृदयादभिजायसे।
आत्मा वै पुत्रनामासि सजीव शरदः शतम्॥
आधत्त पितरौ गर्भं कुमारं पुष्करस्त्रजम्।
यथेह पुरुषस्यात्मा तस्मात्त्वमिह[3] जायसे॥
आत्मा पुत्र इति प्रोक्तः पितुर्मातुरनुग्रहात्।
पुन्नाम्नस्त्रायते यस्तत्पुत्रस्तेनासि[4] संज्ञितः॥

649. शङ्खः पुन्नामा निरयः प्रोक्तश्छिन्नतन्तुश्च नैरयः।
तत्रैव त्रायते यस्मात्तस्मात्पुत्र इति स्मृतः॥

650. शङ्खलिखितौ अग्निहोत्रं त्रयो वेदा यज्ञाश्च शतदक्षिणाः।[1]
ज्येष्ठपुत्रप्रसूतस्य कलां नार्हन्ति षोडशीम्॥

---

648. कृ०क०ल०, XII, p. 720 [1.6 also पितरं त्रायसे यस्मात् (for the prior half).]; ध०ल०, p. 1281 [1 om. हि 2 समन्त्रयेत्; 3 अभि-(for इह); 4 यस्मात् (for यस्तत्).]; वि०र०च०, p. 554-555 [as ध०ल०]; स्मृ०त०र०, (II), p. 390 [reads only last st. 4 पुत्रस् (for यस्तत्); तेनापि पुत्रसंज्ञितः. (for the post halt).]; हि०लो०गं०, p. 173 [1 & 2 as ध०ल०].

649. या०स्मृ०वा०, II. 137, p. 243.

650. कृ०क०ल०, (II), p. 432 [2 बहव पुत्रस्य; 3 अक्षीण °; 4 °प्राप्यं] & (XII), p. 742 [3 अस्कन्न °]; दा०भा०जी०, p. 161; [om. 1.3 & 1.4]; ध०ल०, p. 1281; नि०प्र०नृ०, p. 543 [1 बहुदक्षिणाः]; वी०मि०मि०मि०, p. 506 [1 यसश्चैव स दक्षिणाः; om. 1.3 & 1.4]; वि०र०च०, p. 584.

पुत्रपौत्रप्रतिष्ठस्य बहुपुत्रस्य[2] जीवतः।
अक्षुण्णवेदयज्ञस्य[3] हस्तप्राप्तं[4] त्रिविष्टपम्॥

651. शङ्खलिखितौ पिता पितामहश्चैव तथैव प्रपितामहः।
जातं पुत्रं प्रशंसन्ति पिप्पलं शकुना इव॥
मधुमांसेन खड्गेन पयसा पायसेन वा।[1]
एष दास्यति नस्तृप्तिं[2] वर्षासु च मघासु च॥

652. शङ्खलिखितौ पितॄणामनृणो जीवन्दृष्ट्वा[1] पुत्रमुखं पिता।
स्वर्गी स तेन जातेन तस्मिन्संन्यस्य तदृणम्॥[2]
पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते।
अथ पुत्रस्य[3] पौत्रेण ब्रध्नस्याप्नोति[4] विष्टपम्।
यत्र क्वचन जातेन पिता पुत्रेण नन्दति।
तेन चानृणतां याति पितॄणां पिण्डदेन वै॥

653. शङ्खलिखितौ क्षेत्रिकस्याविज्ञानेन यद्बीजं प्रकीर्यते तत्क्षेत्रिकस्यैव। न तत्र बीजी भागमर्हति।

---

651. कृ०क०ल०, (IV), p. 20; & (X),p. 21 [subst. for l.2 भूयस्तत्रैव जायन्ते तदहर्वेदयन्ति च; om. l.3 & l.4]; च०चि०हे०, p. 471 [2 श्राद्धं (for तृप्तिं). ]; & p. 582 [l.2 as कृ०क०, p. 21 प्रजायन्ते (for एव जा °); om. l.3 & 4]; दा०भा०जी०, p. 63; ध०ल०(व्य०), p. 1281; प्र०पा०नृ०, p. 133 [subst. l.2 as कृ०क०, p. 21; adds तस्मात्स दिवसः पुण्यः पितॄणां प्रीतिवर्धनः; om. l.3 & l.4]; या०स्मृ०शू० II. 29, p. 79 [subst. l.2 as कृ०क०, p. 21; तदहर्वैजयन्ति च; om. l.3 & l.4]; वी०मि०मि०मि० (व्य०), p. 461 1 च (for वा)]; हि०लो०गं०, p. 170 [subst. for l.2 उपासते सुतं जातं शकुना इव पिप्पलम्; om. l.3 & l.4].

652. कृ०क०ल० (II), p. 432 [om. l.1-2]; & (XII), p. 472 [only l.5 & l.6]; दा०भा०जी०, p. 161 [om. l.5 & l.6]; ध०ल० (व्य०), p. 1281; नि०प्र०नृ०, p. 544 [reads only l.3 & l.4; 4 पिष्टपम्]; वी०मि०मि०मि० (व्य०), p. 506 [om. l.5 & l.6]; या०स्मृ०बा० II.137, p. 244 [1 जायेत्; 2 ते ऋणं; 3 पौत्रस्य पुत्रेण; om. l.5 & l.6]; वि०र०च०, p. 586 [om. l.1 & l.2; 4 पिष्टपम्; reads l.5 & l.6 on page 584]; हि०लो०गं०, p. 172 [reads only l.1-3].

653. कृ०क०ल० (XII), p. 739; ध०ल० (व्य०), p. 1282 [om. from न तत्र]; वि०र०च०, p. [as ध०ल०].



654. शङ्खलिखितौ नियतं क्षेत्रिणामपत्यमिति च वेदवादो मातुरपत्यमित्येके ऋषयो वदन्ति द्व्यामुष्यायणमनुमन्त्रयत। तथा वसिष्ठकश्यपयोर्जलगतयोरुदवासादुत्तीर्यैकः प्रजामुत्पादयत्यविज्ञातो लोकानाम्। एवं तयोर्द्विधा सन्तानः। यस्मात्कुलधर्मपरिग्रहरिक्थपिण्डोदकानि चैकतः कृत्वा परक्षेत्रोत्पन्ना अपि प्रयच्छन्ति।

655. शङ्खलिखितौ मन्त्रसंस्कारकर्तुरपत्यमित्याङ्गिरसः। बीजिक्षेत्रिकयोरनुमते[1] यद्बीजं प्रकीर्यते तद्विधा शस्यमित्युशनाः।

## [ दायादा अदायादाश्च ]

656. शङ्खलिखितौ षट्सु दायादेषु विकल्पः। औरसः क्षेत्रजः पुत्रिकापुत्रः[1] पौनर्भवः कानीनो गूढोत्पन्नश्चेति षट्पुत्रा[2] बन्धुदायादाः। पितृपितामहानामेकगोत्राः रिक्थापिण्डांशाः[3] तेषामर्धं दशधा[4] कुर्यात्। द्वौ भागौ पितुः द्वावौरसस्य त्रीन् क्षेत्रजपुत्रिकापुत्रयोः[5] एकैकमितरेषाम्।

657. शङ्खलिखितौ अपविद्धः सहोढः दत्तः क्रीतः[1] शूद्रापुत्र उपनतश्च स्वयमित्यदायादाः षडेव पुत्राः। तेषां सारानुसारतः अर्थमपेक्ष्य देयमेतेभ्यः प्रजीवनम्।

---

654. कृ०क०ल० (XII), p. 740 [om. from ऋषयः upto °मन्त्रयत]; ध०ल० (व्य०), p. 1282; वि०र०च०, p. 581-582.

655. कृ०क०ल०, (XII), p. 722 [1 क्षेत्रयोः (for क्षेत्रिकयोः).]; ध०ल०, p. 1282; वि०र०च०, p. 557; वी०मि०मि०मि० (व्य०), p. 473; हि०लो०गं०, p. 201.

656. कृ०क०ल०, (XII), p. 712 [1 सुतः; 2 षड्विधा; 4 दशभागान्; 5 सुतयोः]; ध०ल० (व्य०), p. 1282 [3 रिक्थपिण्डों सापिण्ड्यं च]; वि०र०च०, p. 547 [as ध०ल०]; हि०लो०गं०, p .258.

657. कृ०क०ल०, (XII), p. 712 [1 also क्रीतकः; adds अर्थमपेक्ष्य देयमेतेभ्यः प्रजीवनम्]; ध०ल०(व्य०), p. 1283 [adds as कृ०क०]; वि०र०च०, p. 547; हि०लो०गं०, p. 258.

[ दायभागकालाः ]

658. शङ्खलिखितौ भ्रातृणां जीवतोः पित्रोः सह भावो विधीयते। तदूर्ध्वमपि तेषां च वृद्ध्यर्थं च सह त्रिभिः॥

659. शङ्खलिखितौ कामं सह[1] वसेयुरेकतः[2] संहता वृद्धिमापद्येरन्।[3]

660. शङ्खलिखितौ जीवति वा[1] पितरि रिक्थविभागोनुमतः। प्रकाशं वा मिथो वा[1] धर्मतः।

661. शङ्खलिखितौ पितर्यशक्ते कुटुम्बव्यवहारान्[1] ज्येष्ठः कुर्यादनन्तरो वा [2]कार्यज्ञस्तदनुमतेन[3] न त्वकामे पितरि रिक्थ-विभागो वृद्धे विपरीतचेतसि दीर्घरोगिणि[4] वा[5] ज्येष्ठ एव पितृवदर्थान्पालयेदितरेषाम्। रिक्थमूलं हि कुटुम्बकमस्वतन्त्राः[6] पितृमन्तो [7]मातर्यप्येवमव-स्थितायाम्।[8]

---

658. ध०ल० (व्य०), p. 1195, स०वि०प्र०, p. 351.

659. ध०ल०(व्य०), p. 1195 [2 एकमताः]; मद०प्र०मद० (व्य०), p. 328; वि०र०च०, p. 458 [1 om. सह; 2 एकत्र]; वी०मि०मि०मि० (व्य०), p. 436; स्मृ०च०दे०, (II), p. 259 [also एकमताः]; हि०लो०मं०, p. 26 [1 om. सह०; 3 आचक्षीरन्].

660. कृ०क०ल०, (XII), p. 653; दा०भा०जी०, p. 29 [om. from प्रकाशं onwards]; ध०ल०, (व्य०), p. 1148 [1 om. वा]; वि०ता०क०, p. 292 [as दा०भा०]; वि०र०च०, p. 463; व्य०नि०व०, p. 407 [reads जीवति पितरि वृद्धे पिपसिचेतसि दीर्घरोगिणि वा ज्येष्ठेनैव]; स्मृ०च०दे०, (II), p. 260; हि०लो०गं०, p. 653 [om. वा० after मियो].

661. कृ०क०ल०, (XII), p. 651 [1 °बस्य व्यवहारं; om. from न त्व upto विभागः]; दा०भा०जी०, p. 23 [1 om. कुटुम्ब; 3 °मतो; 7 मातुः; 8 °मतो; 7 मातुः; 8 °स्थितायाः]; & p. 59 [reads from रिक्थमूलं upto and as. p. 23]; ध०ल०(व्य०), p. 550 [reads as अस्वतन्त्रताः पितृमन्तः]; & p. 1147 [3 कतः; 6 कुटुम्बम्]; & p. 1148 [reads from अकाम upto वा; 4 om. दीर्घ]; प०सं०मा० (v.VII.2), p. 487 [reads as ध०ल०, p. 448; 4 as in text; 5 च (for वा).]; मद०प्र०मद०, p. 327 [1 °बस्य व्यवहारं; further as प०सं०गा०, p. 487]; & p. 647 [reads from अकामे to वा; 4 om. दीर्घ; 5 च (for वा).]; या०स्मृ०अ०, II. 114, p. 718 [reads from



662. शङ्खलिखितौ अत ऊर्ध्वं रिक्थविभागः। न जीवति पितरि पुत्रा[1] रिक्थं[2] विभजेरन्। यद्यपि [3]स्यात्पश्चादधिगत[4]मेतै-रनर्हा एव पुत्रा अर्थधर्मयोरस्वातन्त्र्यात्।[5]

[ एकपुत्रविभागः ]

663. शङ्खलिखितौ स यद्येकः पुत्रः स्याद्।[1] द्वौ भागावात्मनः कुर्यात्। द्विपदचतुष्पदेषु रूपमधिकम्। वृषभो ज्येष्ठाय गृहं यवीयसेऽन्यत्र पितुरवस्थानात्।

---

अकामे upto the end]; या०स्मृ०बा०, II.117, p. 140 [reads अस्वतन्त्राः पितृमन्तो मातर्यप्येवमेव]; या०स्मृ०मि०, II. 114, p. 77 [as मद०प्र०मद०, p. 647]; रा०कौ०अ०, p. 446 [पुत्रेच्छमैवविभागः]; वि०चि०वाच०, p. 194 [as ध०ल०, p. 1148] & p. 193 [reads from अस्वतन्त्राः upto the end]; वि०रा०च०, p. 460 [1 °हारं; 6 कुटुम्बम्]; वी०मि०मि०मि० (व्य०), p. 436 [3.7 & 7 as रा०भा०जी०, p. 23]; & p. 433 [as प०सं०मा०, p. 487]; व्य०चि०वाच०, p. 161 & 774 [as ध०ल०, p. 550]; व्य०म०नी०, p. 42 [1 °स्य व्यवहारं; upto °मतने]; स०वि०प्र०, p. 350 [6 तु कुटुम्बस्य; 3 °मत्या; om. further]; स्मृ०च०दे०, (II), p. 258 [1 कुटुम्बस्य व्यवहार; 3 om. न तु; 5 च (for वा); om. from ज्येष्ठ upto end]; & p. 130 [as ध०ल०, p. 550]; हि०लो०मं०, p. 23 [2 कर्मज्ञ; 6 कुटुम्बम्]; & 18 [as म०पा०मद०, p. 647]; & p. 355 [as वि०चि०वाच०, p. 193].

662. कृ०क०ल० (XII), p. 649 [1 om. पुत्रा; 5 अथ]; ध०ल०(व्य०), p. 1148 [4 तैः (for एतैः)]; प०सं०मा०, (v.II.11), p. 479 [2 भजेरन्; 4 तैः (for एतैः); 5 अथ]; मद०प्र०मद०(व्य०), p. 322 [2 भजेरन्; 4 तै (for एतैः). ]; या०स्मृ०अ०, II. 114, p. 718 वि०ता०क०, p. 284 [2 भजेरन्]; वि०र०च०, p. 456 [4 तै (for एतैः).]; वी०मि०मि०मि० (व्य०), p. 414 [as प०सं०मा०]; स्मृ०च०दे० (II), p. 256 [om from अत upto विभागः; 2 भजेरन्; 3 स्वाम्यं; 4 तैः (for एतैः); 5 अथ]; & p. 257 [only पश्चादधिगतं तैः]; हि०लो०मं०, p. 21 [2 भजेरन्; 4 तैः (for एतैः).].

663. कृ०क०ल०, (XII), p. 654; दा०भा०जी०, p. 47 [reads upto कुर्यात्]; ध०ल०(व्य०), p. 1166; मद०प्र०मद०, p. 329 [as दा०भा०]; या०स्मृ०अ०, II.114, p. 717 [om. स० as दा०भा०]; या०स्मृ०शू०, II. 115, p. 54 [1 वा

[ औरसक्षेत्रजपुत्रिकापुत्रयोर्विभागः ]

664. शङ्खः द्वौ भागौ पितुः द्वावेवौरसस्य त्रयः क्षेत्रजपुत्रिका-पुत्रयोः एकैकमितरेषाम्।

[ भूमिभागः ]

665. शङ्खः पूर्वनष्टां[1] तु यो भूमिमेकश्चेदुद्धरेच्छ्रमात्।[2]
यथाभागं लभन्तेऽन्ये[3] दत्त्वांशं तु[4] तुरीयकम्॥

[ वर्णान्तरजातानां दायभागः ]

666. शङ्खलिखितौ अन्यवर्णस्त्रीषु[1] जातानां दायादर्धार्धहानिर्वर्णक्रमेण[2]।

---

वंशवात्मनः; as दा०भा०]; वि०चि०वाच०, p. 98 [1 वा०वंशवात्मनः]; वि०ता०क०, p. 313; वि०र०च०, p. 465 & p. 475 [reads from वृषभो to यवीयसे]; वी०मि०मि०मि० (व्य०), p. 444; व्य०नि०च०, p. 414 [om. स; as दा०भा०]; व्य०म०नी०, p. 43; स०वि०प्र०, p. 355 [गृह्णीयात्; as दा०भा०]; स्मृ०च०दे० (II), p. 261 [as दा०भा०]; हि०लो०गं०, p. 148 [1 वा०वंशवात्मनः]; & p. 366 [reads from वृषभो upto यवीयसं].

664. या०स्मृ०वि०, II. 135, p. 249.

665. दा०भा०जी०, p. 129 [2 एव (for चेत्); 3 भजन्त्यन्ये; 4 भागं (for [अ] शं०तु०).]; ध०ल०(व्य०), p. 1207 [3 भजन्त्यन्ये]; नृ०म०दल०, p. 230 [पूर्वं नष्टां; 2 क्रमात्]; प०सं०मा० (v.VII.2), p. 558 [यः कश्चित् (for एकश्चित्).]; म०पा०मद०, (VIII), p. 684 [पूर्वं नष्टां; 3 भजन्त्यन्ये also]; मद०प्र०मद० (व्य०), p. 344 [2 क्रमात्]; या०स्मृ०मि०, II. 118-119, p. 79 [as नृ०प्र०]; या०स्मृ०सु०वि०, II.118-119, p. 50 [upto भूमि]; रा०कौ०अ०, p. 449 [as नृ०प्र० & 3 भजन्त्यन्ये]; वि०से०वि०, p. 71 [ab as पूर्वं नष्टां तु यो भूमिमेकदा वोद्धरेच्छ्रमात्]; 3 भजन्त्यन्ये]; वी०मि०मि०मि० (व्य०), p. 557 [as मृ०प्र०]; व्य०म०नी०, p. 55 [2 क्रमात्]; स०वि०प्र० (व्य०), p. 367 [as नृ०प्र०] स्मृ०च०दे० (II), p. 277 [एकश्चाभ्युद्धरेत्क्रमात्]; स्मृ०त०र० (II), p. 177 [1 च (for तु).; 2 एवोद्धरेत्; 3 भजन्त्यन्ये]; हि०लो०गं०, (II), p. 39 [as स्मृ०च०].

666. कृ०क०ल० (XII), p. 700 [1 स्त्रीजातानां]; ध०ल० (व्य०), p. 1243; वि०र०च०, p. 531; हि०लो०गं०, p. 313 [2 om. अर्धं].



[ कन्यांशः ]

667. शङ्खलिखितौ विभज्यमाने दायेभ्यः[1] कन्यालङ्कारं[2] वैवाहिकं स्त्रीधनं च कन्या[3] लभेत्।[4]

668. शङ्खः पैतृकद्रव्यविभागकाले स्वधृतालङ्कारादिकमपि कन्या प्राप्नोति।

[ शूद्रापुत्रभागः ]

669. शङ्खलिखितौ न[1] शूद्रापुत्रोऽर्थभागी। यदेवास्य पिता दद्यात्स एव तस्य[2] भागो गोमिथुनं[3] चापरं[4] दद्यात्कृष्णायसं कृष्णधान्यं तिलवर्जनम्।

[ अविभजनीयाः ]

670. शङ्खलिखितौ न वास्तुविभागो[1] नोदपात्रालङ्कारो[2] पयुक्तस्त्री[3] वास-सामपां प्रचाररथ्यानां[4] विभागश्चेति प्रजापतिः।

---

667. कृ०क०ल० (XII), p. 671 [2 स्वकन्यालङ्कारं; 3 om. कन्या]; ध०ल० (व्य०) p. 1416 & 1428-29 [दायाद्ये; adds तदपत्यस्य च द्रव्यं कन्याभाग एव]; नृ०प्र०दल०, p. 29 [1 द्रव्ये दोषे; 2 om. कन्या]; प०सं०मा०, (v.III.2), p. 511 [1 दाये; 2 adds एव हि after °कारं; 4 लभते]; वि०ता०क०, p. 334 [1 दायाद्ये; 2 om. कन्यालङ्कार; 3 om. च]; वि०र०च०, p. 495 [2 स्वकन्या °; 4 लभते]; व्य०नि०व०, p. 417 [1 दायाद्ये]; व्य०मा०, p. 85 [1 दायार्थे]; स०वि०प्र०, p. 362 [1 दायाद्ये]; स्मृ०च०दे०, (II), p. 269 [1 दायाद्यं]; हि०लो०मं०, p. 568 [1 स्वकन्या °; 3 om. कन्या; 4 लभते].

668. वी०मि०मि०मि० (व्य०), p. 457.

669. कृ०क०ल०, (XII), p. 704 [adds वा after चापरं]; ध०ल०व्य०, p. 1390 [2 अस्य; 3 adds तस्य before गो]; म०स्मृ०मे० IX.155, p. 765 [1 शूद्रपुत्रो; 4 त्वपरं दद्युः; om. from कृष्णा upto वर्जम्]; वि०चि०वाच०, p. 226 [1 om न; 2 transp. तस्य & भागो]; वि०र०च०, p. 536 [as ध०ल०]; हि०लो०मं०, p. 314 [2 transp. तस्य and भाग].

670. दा०भा०जी०, p. 127 [2 अलङ्कारान्]; ध०ल०व्य०, p. 1207; मद०प्र०मद०, p. 349 [3 om. स्त्री; 4 प्रचारवर्त्मनां अवि °]; वि०ता०क०, p. 353 [4

## [ अपुत्रभ्रातृविभागः ]

671. शङ्खः भ्रातॄणामप्रजाः प्रेयात्कश्चिच्चेत्प्रव्रजेत[1] वा।
विभजेरन्धनं तस्य शेषास्ते स्त्रीधनं[2] विना॥
भरणं चास्य [3]कुर्वीरन्स्त्रीणामा[4]जीवनक्षयात्।
रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु च॥[5]
या तस्य दुहिता तस्य पित्रंशे भरणं मतम्।[6]
आसंस्काराद्धरेद्भागं परतो बिभृयात्पतिः॥

672. शङ्खः गोत्रभागविभागार्थे[1] सन्देहे समुपस्थिते।
गोत्रजैश्चापरिज्ञाते[2] कुलं साक्षित्वमर्हति॥

## [ पुत्राभावे विभागः ]

673. शङ्खः पुत्राभावे तु कुर्यातां भर्तृभार्ये परस्परम्।
अपुत्रस्य तु या पुत्री सैव पिण्डप्रदा भवेत्॥

°वर्त्यनां अवि°]; वि०से०वि०, p. 69 [4 प्रचाररथ्यानां विभागश्च; om. further; व्य०म०नी०, p. 57 [3 om. स्त्री; om. from अपां onwards]; हि०लो०गं०, p. 80.

671. कृ०क०ल०, (XII), p. 756 [2 तु (for ते); 5 तत्; 6 पित्रंशो भरणे मतः (for the post half).]; ध०ल० (व्य०), p. 1473 [1 कश्चित्प्रेयात् (by transp.); 6 as कृ०क०]; म०पा०मद० (VIII), p. 680 [2 तु (for ते); om. l.5 & l.6]; मद०प्र०मद० (व्य०), p. 374 [2 तु (for ते) 4 जीवित-(for जीवन-); 6 as कृ०क०]; या०स्मृ०शू०, II. 135-136, p. 57 [only l.3 & l.4; 2 कुर्वीत; 5 आच्छेत्तु विधवासु च (for the post half)]; वि०चि०वाच०, p. 249-250 [1 कश्चित्प्रेयात् (by transp.)]; वि०ता०क०, p. 425 [om. l.2-4; 6 as कृ०क०]; वि०र०च० p. 603 [6 as कृ०क०; om. l.6]; वी०मि०मि०मि० (व्य०), p. 541 [5 तत्; 6 as कृ०क०]; हि०लो०गं०, p. 453 [1 कश्चित्प्रेयात् (by transp.).

672. दा०भा०जी०, p. 229 [1 विभागेऽर्थे] ध०ल० (व्य०), p. 1575; वी०मि०मि०मि०, p. 563 [1 °र्थ; 2 अप्यविज्ञातो]; वी०सं०वि०, p. 87 [2 °ज्ञाने]; स्मृ०त०र०, p. 179; हि०लो०गं०, p. 621 [1 विभागेऽर्थे].

673. स्मृ०मु०वै०, p. 565.



674. शङ्खः पुत्रिका पुत्रवदिति प्रचेतसः। तस्यापत्यं पुत्रिकासुतो मातामहपितामहाभ्यां[1] पिण्डदः।

पुत्रदौहित्रयोर्लोके[2] न विशेषोऽस्त्यनुग्रहे।
तस्मात्तु संशयान्नेहोपेयादभ्रातृकां स्त्रियम्॥[3]

## [ पूर्वाभावे परस्परदायग्रहणम् ]

675. शङ्खलिखितौ [1]रासभोऽधिको ज्येष्ठस्य तस्याभावे क्षेत्रजपुत्रिका[2]-सुतयोस्तयोरप्यभावे त्रयाणामितरेषाम्।
[3]तेषामभावे सवर्णानामदायादानां सर्वरिक्थग्रहणम्।

## [ अरिक्थभाजः ]

676. शङ्खलिखितौ यज्ञार्थं द्रव्यमुत्पन्नं तत्रानधिकृतास्तु ये।
अरिक्थभाजस्ते सर्वे ग्रासाच्छादनभाजनाः॥

## [ श्रेयसोऽलाभे दायभागिनः ]

677. शङ्खलिखितौ श्रेयसः श्रेयसोऽलाभे[1] पापीयान्रिक्थमर्हति।
बहवश्चेत्तु सदृशाः सर्वे रिक्थस्य भागिनः॥

674. कृ०क०ल०, (IV), p. 243 [1° महानां; 2 om. लोके; 3 om. स्त्रियम्]; & p.724; ध०ल० (व्य०), p. 1282; वि०र०च०, p. 559-560; हि०लो०गं० (II), p. 186 [om. from पुत्रदोहित्र upto ग्रहे].

675. कृ०क०ल०, (XII), p. 712 [1 ऋषभो; 2 adds पुत्र after पुत्रिका; 3 तेषामप्यभावे षण्णामदायदानां]; गो०ध०सू०, p. 448 [1 उपार्जितं (for सुत); 3 तेषामप्यभावे षड्भ्यः]; ध०ल०(व्य०), 1283; वि०र०च०, p. 546-47.

676. ध०ल०, p. 1390.

677. कृ०क०ल०, (XII), p. 717 [om. l.2]; ध०ल०(व्य०), p. 1283 [1 अभावे]; या०स्मृ०वा० II. 135 p. 236; वि०र०च०, p. 552 [1 अभावे; om. l.2]; हि०लो०गं०, p. 257 [1 अभावे].

678. पा०गृ०सू०, p. 500.

### [ देशान्तरगतोऽपि पुत्रोऽधिकारी ]

678. शङ्खः भार्यामरणपक्षे वा देशान्तरगतोऽपि वा।
अधिकारी भवेत्पुत्रो महापातकिनोऽपि वा॥

### [ संसृष्टानां भागः ]

679. शङ्खः संसृष्टानां तु यो भागस्तेषामेव स इष्यते।

### [ अपुत्रस्य दायभागिनः ]

680. शङ्खलिखितपैठीनसियमाः
अथापुत्रस्य[1] स्वर्यातस्य भ्रातृगामि द्रव्यं तदभावे मातापितरौ[2] लभेतां[3] पत्नी वा ज्येष्ठा सगोत्रशिष्यसब्रह्मचारिणः।

---

679. या०स्मृ०वा०, II. 135, p. 222.

680. दा०भा०जी०, p. 154 [1 om. अथ; 2 om. माता; 3 हरेतां]; & p. 166 [तस्य धनं ज्येष्ठा पत्नी हरेत् तदभावे पितरौ हरेतां तदभावे भातृगामी]; ध०ल०(व्य०), p. 1471 [as दा०भा०, p. 154]; पं०सं०मा०, p. 540. [1 स्वर्यातस्य ह्यपुत्रस्य; 2 om. माता; 3 हरेतां; तदभावे त्वसंसृष्टः पिता तदभावे माता तदभावे ज्येष्ठापत्नी]; या०स्मृ०अ०, II. 136, p. 741 [om. from स to णः]; या० स्मृ०बा०, II. 135, p. 221 [1 om. further]; या०स्मृ०मि०, II, 135-136, p. 91 & p. 94 [as या०स्मृ०बा०]; या०स्मृ०वि० II.140, p. 251 [as या०स्मृ०बा०]; या०स्मृ०शू०वि० II. 136, p. 70 [as या०स्मृ०बा०, reads upto हरेयातां]; वि०ता०क०, p. 392 [as या०स्मृ०बा०; 3 हरेतां]; & p. 425 हरेतां तदभावे ज्येष्ठपत्नी]; वी०मि०मि०मि०, p. 494 [1 om. अथ; om. माता) om. from स to णः]; & p. 502 [reads only ज्येष्ठा वा पत्नी]; & p. 526 [om. अथ; 2 om. माता; reads upto पितरौ]; & p. 538 [as या०स्मृ०बा०]; व्य०मा०, p. 90 [om. अथ; reads upto द्रव्यं]; स०वि०प्र०, p. 434 [as व्य०मा०]; स्मृ०च०दे० (II), p. 299 & p. 305 [as या०स्मृ०वा०]; p. 299 upto हरेयातां]; हि०लो०ग०, p. 448 [as या०स्मृ०बा० also अथापुत्रस्य स्वर्यातस्य].



### [ भ्रातृभार्यास्नुषादीनां पिण्डदानेऽधिकारः ]

681. शङ्खः भ्रातृभार्याणां स्नुषाणां[1] च न्यायतः प्रवृत्तानामनपत्यानां पिण्डमात्रं गुरुर्दद्यात् जीर्णानि वासांस्यविकृतानि।

### [ प्रेतकार्याण्यकृत्वा धनं न हार्यम् ]

682. शङ्खः अकृत्वा प्रेतकार्याणि प्रेतस्य धनहारकः।
वर्णानां यद्वधे प्रोक्तं तद्व्रतं नियतश्चरेत्॥

### [ पुत्रिकायाः द्रव्याधिकारी न भर्ता ]

683. शङ्खलिखितौ प्रेतायाः पुत्रिकायास्तु[1] न भर्ता द्रव्यमर्हति।[2]

### [ मातृकरिक्थाधिकारः ]

684. शङ्खः स्वं च शुल्कं वोढा।

685 शङ्खलिखितौ समं सर्वे सोदर्या[1] मातृकं रिक्थ[2]मर्हन्ति कुमार्यश्च।

---

681. ध०ल०, p. 1390 & p. 1473; वि०चि०वाच०, p. 237 [1 adds च before स्नुषाणां]; हि.लो.गं०, p. 477.

682. ध०ल०(व्य०), p. 1473; हि०लो०गं०, p. 105.

683. दा०भा०जी०, p. 178; ध०ल० (व्य०), p. 1429 [adds अपुत्रायाः at the end]; या०स्मृ०अ०, II. 145, p. 754 [1 om. तु; 2 धनमर्हत्यपुत्रायाः]; हि०लो०गं०, p. 105, [as या०स्मृ०].

684. कृ०क०ल० (XII), p. 692 [स्वयं (for स्वं च).]; ध०ल० (व्य०), p. 1429; मद०प्र०मद०, p. 383; वि०र०च०, p. 521 [as कृ०क०]; व्य०म०नी०, p. 72 शुल्कं च स्वयं वोढा]; स०वि०प्र०, p. 385; स्मृ०च०दे० (II), p. 287 [स्वं स्त्री च शुल्कं वोढा]; हि०लो०गं०, p. 585 [as व्य०म०].

685. दा०भा०जी०, p. 79 [om. मातृकं; 2 द्रव्यम् (for रिक्थम्)]; ध०ल०, p. 1429; प०सं०मा०, p. 551 [1 सहोदरा]; या०स्मृ०बा०, II.45, p. 259 & 260 [upto सौदर्या]; वि०ता०क०, p. 452 [as दा०भा०व्य०वि०व०, p. 462 [1 सहोदरा]; हि०लो०गं०, p. 574 [as दा०भा०].

### [ स्त्रीधनाधिकारिणः ]

686. शङ्खलिखितौ स्त्रीधनं कन्या लभते तदपत्यस्य च[1] द्रव्यं कन्याभागमेव।

### [ अपात्रस्य न दायभागः ]

687. शङ्खलिखितौ अपात्रितस्य[1] रिक्थपिण्डोदकानि[2] व्यावर्तन्ते।[3]

### [ आमयग्रस्तानां सुताः भागहारिणः ]

688. शङ्खलिखितनारदाः

दीर्घं तीव्रामयग्रस्ता ये जडोन्मत्तपङ्गवः।
भर्तव्याः स्युः कुलस्यैते तत्सुता भागहारिणः॥

### [ अपुत्रधनविभागः ]

689. शङ्खलिखितौ परिषद्गामि वा[1] श्रोत्रियद्रव्यं न[2] राजगामि। न हार्यं राज्ञा देवब्राह्मणसंस्थितम्। न[3] निक्षेपोपनिधिक्रमागतम्। न बालस्त्रीधनानि। एव ह्याह

686. कृ०क०ल०, (XII), p. 726 [adds च after स्त्रीधनं; 1 धनं (for च द्रव्यं)]; वि०र०च०, p. 561; हि०लो०गं०, p. 564.

687. कृ०क०ल०, (XII), p. 666; ध०ल०, p. 1390 [3 निवर्तन्ते]; नि०सि०क०, p. 409; मद०प्र०मद०, p. 356 [1 अपपात्रिते]; वि०ता०क०, p. 432; वि०चि०वाच०, p. 206 [3 निवर्त०]; वि०र०च०, p. 486 [3 निवर्तन्त]; व्य०म०नी०, p. 73 [1 °पात्रिते; 2 °दकादि; 3 °वर्तन्त]; स्मृ०च०दे०, (II), p. 270 [1 आवयातिकस्य; 3 निवर्त °]; हि०लो०गं०, (II), p. 103 [3 निव°].

688. वि०ता०क०, p. 432.

689. कृ०क०ल०, (XII), p. 752; ध०ल०, p. 1473 [3 स निक्षेप °]; & p. 1950 [reads only st.] वि०चि०वाच०, p. 243 [1 om. वा; 2 adds तु after न; reads upto राजगामि]; & p. 244; हि०लो०गं०, p. 522 [as वि०चि०वाच०]; & p. 593 [reads only st.]



न हार्यं स्त्रीधनं राज्ञा तथा बालधनानि च।
नार्याः षडागमं वित्तं बालानां पैतृकं धनम्॥

690. शङ्खलिखितौ रक्षेद्राजा बालानां धनानि अप्राप्तव्यवहाराणां श्रोत्रियवीरपत्नीनां प्रहीणस्वामिकानि राजगामीनि भवन्ति।

690. कृ०क०ल० (XII), p. 753; ध०ल० (व्य०), p. 1950; वि०र०च०, p. 598-599; हि०लो०गं०, p. 522 [only प्रहीण to भवन्ति]; & p. 523 [upto पत्नीनां].

# प्रायश्चित्ताध्यायः

## आशौचप्रकरणम्

**[ क्रिया पुत्रेण कार्या ]**

691. शङ्खः — **मृते पितरि पुत्रेण क्रिया कार्या विधानतः।**

**[ मातापित्रोर्जननाशौचम् ]**

692. शङ्खलिखितौ — **स्नानोपस्पर्शनादेव पिता शुद्धः नाडीच्छेदनात्परं दशरात्रपर्यन्तं मातुरप्यङ्गाशौचम्।**

**[ उदकदानादिकम् ]**

693. शङ्खलिखितौ — **उदकक्रिया कामं श्वशुरमासतुलयोः शिष्ये सहाध्यायिनि राजनि च।**

694. शङ्खः — **प्रेतस्य बान्धवा यथावृद्धमुदकमवतीर्य नोद्धर्षयेरंस्ते[1] प्रसिञ्चेरन्सकृत्प्राग्दक्षिणाभिमुखाः।[2] राजन्यवैश्यावप्यपसव्यं[3] वासो यज्ञोपवीते कृत्वा असावेतत्ते।[4]**

---

691. या०स्मृ०बा०, III. 16, p. 30.

692. का०सा०गदा०, (I), p. 282.

693. कृ०क०ल०, (X), p. 85; नि०सि०क०, p. 408; या०स्मृ०बा०, p. 11; या०स्मृ०शू०, p. 75; हा०अ०, p. 150; शु०र०च०, fol. 56.

694. कृ०क०ल०, (X), p. 82 [2 om. [अ]भि–; 4 [अ]ञ्जलिना वसने मत्त; upto °रन्यानि]; या०स्मृ०अ०, p. 875 [1 न इत्यर्थयेरन्नपः (for नोद्धर्षयेरंस्ते); 3 [ए]वमेव (for [अ]पसव्यं); 4 [अ]ञ्जलिनासावेतत्]; या०स्मृ०बा०, p. 10 [reads only from राजन्य upto कृत्वा]; या०स्मृ०वि० (II), p. 3 [reads as दक्षिणामुखा अपोऽवतीर्य सकृदाप्लुत्य नोद्धर्षणं कुर्युः]; शुकौ०गो०, p. 123 [1 °रन् सकृदपः प्रसिञ्चेरन्; om. further]; शु०र०च०, fol. 55; हा०अ०, p. 147 [अप (for ते); om from उदकमि° upto °न्यानि].



695. शङ्खलिखितौ — **उत्तीर्य प्रेतस्पृष्टानि वासांस्युत्सृज्येतराणि परिधाय गृहद्वारे तस्मै प्रेताय पिण्डं दत्त्वा पश्चाद् दूर्वाप्रवालान्गोमयमग्निं जलं[1] वृषभं[2] चालभ्य प्रविशन्तो घृतगौरसर्षपैर्मूर्धानमङ्गानि चालभेरन्।[3]**

696 शङ्खः — **दूर्वाप्रवालमग्निं वृषभं चालभ्य गृहद्वारे प्रेताय पिण्डं दत्त्वा पश्चात्प्रविशेयुः।**

697. शङ्खलिखितौ — **शस्त्रपाणयो यथोक्तकालनियमाः प्रेतायावश्यकान्युभयकालं कुर्युः। भूमौ माल्यं पिण्डं पानीयम् उपलेपानि वा दद्युः। तत्कालमनध्यायो गोत्रतः पर्युपासनं च।**

**[ दशाहार्दर्वाग् बालाशौचम् ]**

698. शङ्खः — **बालस्त्वन्तर्दशाहे तु प्रेतत्वं यदि गच्छति।
सद्य एव विशुद्धिः स्यान्नाशौचं नैव सूतकम्॥**

699. शङ्खः — **अनार्दशाहोपरतस्य सूतिकाहोभिरेवाशौचम्।**

---

695. कृ०क०ल० (X), p. 99 [2 om. च; 3 वा (for च)]; या०स्मृ०मि० III. 12-13 p. 168 [reads सदूर्वाप्रवालमग्निवृषभौ वा]; या०स्मृ०शू० III.12-13, p. 76. [om. from उत्तीर्य upto पश्चात्; 1 om. जलं]; शु०कौ०गो०, p. 139 [om. from उत्तीर्य upto पश्चात्; 1 अजं (for जलं).; adds शस्त्रपाणयो after प्रविशन्तो]; शु०र०च०, fol. 62; स्मृ०मु०वै०, p. 604 [as या०स्मृ०शू० also om. चालभ्य]; हा०अ०, p. 154-155 [1 also अजं].

696. प०सं०मा० (v.I.2), p. 293; या०स्मृ०अ० III. 12-13, p. 882; स्मृ०मु०वै०, p. 600.

697. कृ०क०ल०, (X), p. 99; म०पा०मद०, p. 399. [reads only from भूमौ upto दद्युः]; या०स्मृ०अ०, III. 16, p. 887 [as म०पा०मद०]; 1 उपलेपनं च]; या०स्मृ०मि०, III.16, p. 170 [as म०पा०मद०]; स्मृ०मु०वै०, p. 60 [as म०पा०मद०]; हा०अ०, p. 154-155.

698. का०सा०गदा०, p. 95 [subst. for cd as शौचं सपिण्डानां न प्रेतं नैव सूतकम्]; शु०कौ०गो०, p. 22; & p. 190; हा०अ०, p. 41.

699. स्मृ०मु०वै०, p. 504.

700. शङ्खः अनिवृत्ते दशाहे तु पञ्चत्वं यदि गच्छति।
मातुः प्रासविकं शौचमुपस्पृश्य पिता शुचिः॥
701. शङ्खः दशमान्तर्गते बाले शुद्धिः स्याज्जन्मना सह।

[ बालाशौचम् ]

702. शङ्खः प्राङ्नामकरणात्सद्यः शुद्धिः।[1]
703. शङ्खः चतुर्थे दशरात्रं स्यात्षण्णिशाः पुंसि पञ्चमे।
षष्ठे चतुरहाच्छुद्धिः सप्तमे त्वहरेह तु॥
704. शङ्खलिखितौ जनन्येऽप्येवं तेषां यत्र मातापितरावशुची मातेत्येके।
705. शङ्खः जनने मरणे चैव सपिण्डानां द्विजोत्तमः।
त्र्यहाच्छुद्धिमवाप्नोति[1] योऽग्निवेदसमन्वितः॥
706. शङ्खः अजातदन्तासु पित्रोरेकरात्रम्।
707. शङ्खः अजातदन्ते बाले[1] तु सद्यः शौचं विधीयते।
अहोरात्रात्तथा शुद्धिर्बाले तु[2] कृतचूडके॥
तथैवानुपनीते तु त्र्यहाच्छुध्यन्ति बान्धवाः॥

---

700. या०स्मृ०अ०, III. 24, p. 910.
701. स्मृ०मु०वै०, p. 504.
702. नि०अ०, p. 241; नि०सि०क०, p. 364 [2 शौचम्]; प०सं०मा०, (v.I.11), p. 230; म०पा०मद०, p. 384; या०स्मृ०अ०, III.24, p. 910; या०स्मृ०मि०, p. 176 & p. 281 [both 1 शौचम्]; शु०म०नी०, p. 5; शूद्र०क०क०, p. 43 [1 शौचम्]; स्मृ०मु०वै०, p. 503. [1 शौचम्;] स्मृ०सा०वि०, p. 214.
703. स्मृ०मु०वै०, p. 518.
704. कृ०क०ल० (X), p. 18; हा०अ०, p. 17.
705. कृ०क०ल०, (X), p. 4 & p. 19 [1 दशाहाच्छुद्धिमाप्नोति]; शु०र०च०, fol. 4.
706. पं०सं०मा०, p. 246.
707. कृ०क०ल०, (X), p. 37 [1 त्व (for तु); प०सं०मा०, v.I.11), p. 243 [1 तनये (for बाले तु).]; या०स्मृ०अ०, III. 24, p. 910; शु०र०च० fol. 22 [2 त्वकृत्]; स्मृ०मु०वै०, p. 507 [1 तनये (for बाले तु); 2 त्वकृत् (for तु °)].



708. शङ्खलिखितौ बाले चातीते सद्यः शौचं सगुणानामात्रिवर्षात्।

[ सापिण्ड्यनिर्णयः ]

709. शङ्खलिखितौ सपिण्डता तु सर्वेषां[1] गोत्रतः सप्तपौरुषी।
पिण्डं चोदकदानं च शौचं[2] चैव तदानुगम्॥

[ सपिण्डानामाशौचनम् ]

710. शङ्खः सपिण्डे ब्राह्मणे वर्णाः सर्व एवाविशेषतः।
दशरात्रेण शुद्ध्येयुरित्याह भगवान्यमः॥
सपिण्डे क्षत्रिये शुद्धिः षड्रात्रं ब्राह्मणस्य तु।
वर्णानां परिशेषाणां द्वादशाहेन निर्दिशेत्॥
त्रिरात्रमथ षड्रात्रं पक्षं[1] मासं तथैव च।
वैश्ये सपिण्डे वर्णानामाशौचं क्रमतः[2] स्मृतम्॥
एकरात्रं त्रिरात्रं वा षड्रात्रं मासमेव च।
शूद्रे सपिण्डे वर्णानामाशौचं क्रमतः स्मृतम्॥

[ मातामहादिमरणाशौचम् ]

711. शङ्खः मातामहे तथातीते आचार्ये तु तथा मृते।
गृहे मृतासु कन्यासु दत्तासु च तथा त्र्यहम्॥

---

708. शु०कौ०गो०, p. 24.
709. द०मी०नद०, p. 241 [1 विज्ञेया; 2 शौचाशौचं]; नि०सि०क०, p. 204 [2 आशौचं च (for शौचं चैव).]; मा०ध०सू० V.60, p. 626 [om. cd.]; या०स्मृ०वा०, I.53, p. 191 [om. cd.]; वी०मि०मि०मि० p. 109, [om. cd]; शु०कौ०गो०, p. 50; शु०वि०रु०, p. 45 [2 शौचाशौचं]; षड०आ० fol. 84 [2 शौचाशौचे]; सा०क०रा०, p. 30 & p. 31 [both om. cd.]; स्मृ०त०र०, p. 398 [2 शौचाशौचं]; स्मृ०मु०वै०, p. 496 [om. cd]; हा०अ०, p. 96.
710. कृ०क०ल० (X), p. 27; षड्०आ० fol. 74. [om. l.1-2; 1 पक्ष एकस्; 2 क्रमशः].
711. कृ०क०ल० (X), p. 53; शु०र०च०, fol. 33.

निवासराजनि प्रेते जाते दौहित्रके तथा।
आचार्यपत्नीपुत्रेषु मृतेषु दिवसेन तु॥
मातुले पक्षिणी रात्रिः शिष्यर्त्विग्बान्धवेषु च।
स ब्रह्मचारिण्येकाहमनूचाने मृते तथा॥

712. शङ्खः आचार्ये चैवं मातामहयोश्च स्त्रीणां चाप्रत्तानां कुर्वीरंस्ताश्च तेषाम्।

[ अनौरसपुत्रादिमृतेष्वाशौचम् ]

713. शङ्खः अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च।[1]
परपूर्वासु च स्त्रीषु त्रिरात्राच्छुद्धिरिष्यते॥

714. शङ्खः मृते सुते तु दासानां पुत्राणां चानुलोमिनाम्।
स्वामितुल्यं भवेच्छौचमृते स्वामिनि यातकम्॥

[ ऊढायाः कन्याया आशौचम् ]

715. शङ्खलिखितौ एकाहं कन्यायामूढायां पुनर्गोत्रतः[1] पिण्डशौचयोर्निवृत्तिः।

[ अनूढायां मृतायामाशौचम् ]

716. शङ्खः पितृवेश्मनि या नारी रजः पश्यत्यसंस्कृता।
तस्यां मृतायां नाशौचं कदाचिदपि शाम्यति॥

---

712. नि०सि०क०, p. 408.

713. कृ०क०ल० (X), p. 55; नि०सि०क०, p. 371. प०सं०मा०, (v.I.11), p. 250; शु०वि०रु०, p. 25 [1 [अ]पि (for च).]. स्मृ०मु०वै०, p. 520.

714. या०स्मृ०वि०, (II), p. 13.

715. कृ०क०ल०, (X), p. 41 [1 om. पुनर्]; शु०र०च०, fol. 23; हा०अ०, p. 491.

716. कृ०क०ल०, (X), p. 41; नि०सि०क०, p. 366; शु०कौ०गो०, p. 165 [subst. for cd प्रसवे मरणे चैव तज्जन्म शौचं नोपशाम्यति]; शु०वि०रु०, p. 18 [13 शु०कौ०]; षड०आ० fol. 52; स्मृ०मु०वै०, p. 515.



[ बान्धवानामाशौचम् ]

717. शङ्खः त्र्यहं[1] योनिबन्धूनामाशौचं दहनादिषु।[2]

718. शङ्खलिखितौ आशौचं तु त्रिरात्रं स्यात् समानामिति निश्चयः।

[ दाहादूर्ध्वमाशौचम् ]

719. शङ्खः मरणादेव कर्तव्यं[1] संयोगो यस्य नाग्निना।[2]
दाहादूर्ध्वमाशौचं स्याद्यस्य[3] वैतानिको विधिः॥

[ गर्भस्त्रावाशौचम् ]

720. शङ्खलिखितौ गर्भमाससमा रात्रीः स्त्रंसने गर्भस्य त्र्यहं वा। सर्वेषां सकुलानाम्।

[ शूद्रादीनामाशौचम् ]

721. शङ्खः अनूढानान्तु कन्यानां तथा वै शूद्रजन्मनाम्।
अनूढभार्यः शूद्रस्तु षोडशाद्वत्सरात्परम्॥
मृत्युं समधिगच्छेत्त[1] मासात्तस्यापि[2] बान्धवाः।
शुद्धिं समधिगच्छन्ति नात्र कार्या विचारणा॥

---

717. स्मृ०मु०वै०, p. 545. [1 त्र्यहं च; 2 वहना°]; & p. 617.

718. षड०आ०, fol. 83.

719. का०त०वि०रघु० (II), p. 471 [2 नाग्निभिः; कृ०स०अ०, p. 147 [1 कर्तव्यः]; शु०कौ०गो०, p. 79 [3 तु (for स्याद्).]; शु०र०च०, fol. 51; श्राद्ध०कौ०गो०, p. 338 [दाहात्परमशौचं तु तस्य.....]; षड०आ० fol. 68 [adds हि before कर्त्तव्यं (hypermetric); स्मृ०त०र०, p. 247; हा०अ०, p. 131.

720. कृ०क०ल० (V), p. 44; शु०र०च० fol. 28.

721. का०सा०गदा०, p. 298 [reads only l.1]; कृ०क०ल०, (X), p. 40 [l.1 वैश्यशूद्रद्विजन्मनां (for the post. half). 2 मासं (for मासात्).]; कृ०स०अ०, p. 156 [om. l.1; 1 गच्छन्ति; 2 मासं); नि०सि०क०, p. 366 [reads upto शूद्रस्तु in l.2]; & p. 369 [om. l.1; 1 चेत् (for तु).]; या०स्मृ०अ० III.23, p. 907 [om. l.1 & l.4]; या०स्मृ०वा० III. 22, p. 71 [om. l.1];

### [ वर्णानुलोम्येनाशौचम् ]

722. शङ्खः वर्णानामानुलोम्येन स्त्रीणामेको यदा पतिः।
दशाहषट्त्र्यहैकाहाः सूतके मृतके तथा॥

### [ ब्रह्मचारिणामाशौचम् ]

723. शङ्खलिखितौ जनने मरणे चैव नाशौचं ब्रह्मचारिणाम्।
पित्रोर्मरण एव स्यादाशौचमुदकं तथा॥

### [ हीनवर्णनार्याः प्रसवे मरणे चाशौचम् ]

724. शङ्खः हीनवर्णा तु या नारी[1] प्रमादात्प्रसवं व्रजेत्।
प्रसवे मरणे तज्जमशौचं[2] नोपशाम्यति॥

### [ शस्त्रादिभिः प्रमापणे आशौचम् ]

725. शङ्खलिखितौ अथ शस्त्रानाशकाग्नि रज्जु[1]भृगु-जलविषप्रमापणे-ष्वेवमेव।

---

शु०कौ०गो०, p. 25 [reads only l.1; also मृतानां कन्यकानां तु]; (second time) [om. l.1; 1 समवगच्छेत्; 2 मासं]; शु०र०च० fol. 23 [only upto कन्यानां]; शु०वि०रु० p. 15 [om. l.1, 1 चेत् (for तु).; 2 मासं]; शूद्र०क०क०, p. 44 [reads only अनूढभार्यः शूद्रास्तु]; & p. 4) [om. l.1; 1 चेत् (for तु)]; शू०शि०शेष०, p. 704 [as शु०वि०रु०]; षड०आ०, fol. 76 [as शु०वि०रु०]; स्मृ०कौ०मद० fol. 66 [1 चेत् (for तु); Subst. for l.4 गृहे मृतासु दत्तासु कन्यकासु त्र्यहं तथा]; हा०अ०, p. 48 [2 मासं].

722. या०स्मृ०वि० (II), p. 13.

723. षडशीति०आ०, fol. 107.

724. कृ०क०ल० (X); p. 28 [1 साध्वी (for नारी)]; शु०कौ०गो०, p. 65; शु०र०च०, fol. 1) [2 चैव तदशौचं न शाम्यति]; शु०वि०रु०, p. 8 [2 तत्र]; शू०शि०शेष०, p. 197.

725. कृ०क०ल०, (X), p. 48 [1 व्रज]; हा०अ०, p. 113.



726. शङ्खः भृग्वग्न्यनाशकाम्भोभिः मृतानामात्मघातिनाम्।
पतितानां च नाशौचं शस्त्रविद्युद्धताश्च ये॥

727. शङ्खः व्यापादयेदथात्मानं स्वयं वाग्न्युदकादिषु।
विहितं तस्य नाशौचं नाग्निर्नाप्युदकक्रिया॥

728. शङ्खः अथ कश्चित्प्रमादेन म्रियेताग्न्युदकादिषु।
तस्याशौचं विधातव्यं कार्या चास्योदकक्रिया॥

### [ अतिक्रान्ताशौचम् ]

729. शङ्खलिखितौ अथ यदि दशरात्राः सन्निपातेयुः पुरार्धं दशरात्र-मादिवसादत ऊर्ध्वं त्रिरात्रेण व्युष्टायां त्रिरात्रेण।

730. शङ्खः ऊर्ध्वं दशाहाच्छुत्वैकरात्रम्।

731. शङ्खः समानाशौचसंपाते प्रथमेन समापयेत्।
असमानं द्वितीयेन धर्मराजवचो यथा॥

732. शङ्खः अतीते सूतके स्वे स्वे त्रिरात्रं स्यादशौचकम्।
संवत्सरे व्यतीते तु सद्यः शौचं विधीयते॥

733. शङ्खः अतीते दशरात्रे तु त्रिरात्रमशुचिर्भवेत्।
तथा संवत्सरेऽतीते स्नात एव विशुध्यति॥

---

726. का०सा०गदा०, p. 316; कृ०क०ल०, (X); p. 48; शु०र०च०, fol. 28.

727. का०सा०गदा०, p. 316-317; कृ०क०ल० (X), p. 48 [only first st.].

728. का०सा०गदा०, p. 317 [म्रियतेग्न्यु °]; कृ०क०ल०, (X), p. 48.

729. शु०म०नी०, p. 34.

730. स्मृ०मु०वै०, p. 535.

731. कृ०क०ल०, (X), p. 31 [समानं खलु शौचं तु]; नि०सि०क०, p. 379; प०सं०मा०, (v.I.11), p. 265; या०स्मृ०अ०, III.20, p. 898; स्मृ०मु०वै०, p. 531; स्मृ०सा०नृ० fol. 13; हा०अ०, p. 65 [समानशौचं प्रथमे].

732. दा०कौ०गो०, p. 25; शु०कौ०गो०, p. 73; हा०अ०, p. 35.

733. प०सं०मा० (v.I.11), p. 234 [om. from तथा]; स्मृ०मु०वै०, p. 534.

### [ आशौचसंनिपाते ]

734. शङ्खः मातर्यादौ परीतायामशुद्धौ[1] म्रियते पिता।
पितुः शेषेण शुद्ध्येत्तु मातुः कार्या तु पक्षिणी॥

735. शङ्खलिखितौ अथ चेदन्तरा प्रमीयेत[1] जायेत वावशिष्टैरेव[2] दिवसैः[3] शुद्ध्येत्। अहः शेषे द्वाभ्याम्। प्रभाते तिसृभिः।[4]

### [ देशान्तरमरणे ]

736. शङ्खलिखितौ देशान्तरिते बाले चातीते सद्यः शौचम्।
य ऊनत्रिवर्षः[1] स्यादनुत्पन्नदन्तक[2] इत्येके॥

737. शङ्खः देशान्तरगतं श्रुत्वा कल्याणं मरणं तथा।
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत्॥

### [ अन्यपूर्वभार्यादीनां नाशौचम् ]

738. शङ्खलिखितौ अन्यपूर्वासु भार्यासु कृतकेषु सुतेषु च।[1]

---

734. नि०सि०क०, p. 381; प०सं०मा०, (v.I.11), p. 267 [1 अशुद्धे]; या०स्मृ०अ०, III.20, p. 900 [subst. मातर्यादौ परीतायामशुद्धौ म्रियते पिता। पितुः शेषेण शुध्येत्तु मातुः कार्या तु पक्षिणी]; षड०आ० fol. 29, [1 अशुचौ]; स्मृ०मु०वै०, p. 532 & p. 636 [1 अशुद्धे]; स्मृ०सा०नृ०, fol. 14.

735. का०सा०गदा०, p. 302 [4 त्रिभिः]; कृ०क०ल० (X), p. 30; नि०सि०क०, p. 380 [om. from अथ upto शुध्येत्]; प०सं०मा० (v.I.11) p. 266 [2 om. [अ]व-; 3 दिनैः]; शु०र०च०, fol. 17; शूद्र०क०क०, p. 50 [reads from अहः]; षड०आ० fol. 25; स्मृ०कौ०मद० fol. 64; स्मृ०मु०वै०, p. 530 [2 om. [अ]व-].

736. कृ०क०ल० (X), p. 35 [1 यद्यूनद्विवर्ष; 2 दशनं]; हा०अ०, p. 39.

737. प०सं०मा०, (v.I.11), p. 235-236; स्मृ०मु०वै०, p. 534.

738. कृ०क०ल० (X), p. 55 [कृतेषु च सुतेषु चेदमृतेषु च त्र्यहं तत्र (for the prior half of l.2).]; नि०सि०क०, p. 371 [पर (for अन्यः).; पुत्रेषु कृतकेषु च]; या०स्मृ०अ० III.24, p. 914 [om. l.2; 1 वा (for च); adds तथा नामध्यायो



नानध्यायो भवेत्तस्य नाशौचं नोदकक्रिया॥

739. शङ्खः अन्यपूर्वा गृहे यस्य भार्या स्यात्तस्य नित्यशः।
आशौचं सर्वकार्येषु गेहे भवति सर्वदा॥

### [ राजादीनां नाशौचम् ]

740. शङ्खलिखितौ राजा धर्मायतनं सर्वेषाम्। तस्मादनवरुद्धः प्रेतप्रसव-दोषैः।

741. शङ्खलिखितौ राज्ञां[1] पुरोहितोऽमात्यः शुद्धिस्तस्य तदाश्रया।[2]
शिष्यस्य[3] पैतृकं शौचं गुरुरेव प्रपद्यते॥

742. शङ्खलिखितौ मातापित्रोरुपासीने न गुरुः प्रतिपद्यते।
पिण्डोदकं तु जनकगोत्रमेव प्रपद्यते॥

743. शङ्खलिखितौ उपासीने तत्समीपवासिनि ब्रह्मचारिणि।

### [ त्रिषु पिण्डाः ]

744. शङ्खः पिण्डस्त्वावर्तते त्रिषु।

### [ प्रेतालङ्करणे असपिण्डस्य प्रायश्चित्तम् ]

745. शङ्खः कृच्छ्रपादोऽसपिण्डस्य प्रेतालङ्करणे कृते।
अज्ञानादुपवासः स्यादशक्तौ स्नानमिष्यते॥

---

नोदकक्रिया]; या०स्मृ०बा० III.24, p. 76 [om. l.2; पुत्रेषु कृतकेषु]; शु०वि०रु०, p. 25 [om. l.2]; हा०अ०, p. 81 [adds after l.1 तेषां चोपरते स्नानं नाध्यायो नोदकक्रिया].

739. शु०कौ०गो०, p. 65.

740. कृ०क०ल० (X), p. 62.

741. कृ०क०ल० (X), p. 62 [1 राज्ञः; 2 [आ]श्रयात्; अशिष्यस्तु; 4 गुरवे न] स्मृ०त०र०, p. 68 [only ab]; हा०अ०, p. 104.

742. कृ०क०ल०, (X), p. 62 [om. l.2]; हा०अ०, p. 104.

743. कृ०क०ल०, (X), p. 62.

744. या०स्मृ०वि० (2), p. 13.

745. नि०सि०क०, p. 375; म०पा०मद० (V), p. 437; या०स्मृ०बा०, III.14, p. 26; या०स्मृ०मि०, III.26, p. 184.

### [ आशौचे पुत्रजन्मनि तात्कालिकी शुद्धिः ]

746. शङ्खः आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्।
कर्तुस्तात्कालिकी शुद्धिः पूर्वशौचेन शुद्धयति॥

747. शङ्खः [1]आद्यं श्राद्धमशुद्धोऽपि [2]कुर्यादेकादशेऽहनि।[3]
कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः॥

### [ अग्निहोत्रार्थं सद्यः शौचम् ]

748. शङ्खलिखितौ अग्निहोत्रार्थं स्नानोपस्पर्शनादेव पिता शुचिः।

749. शङ्खः एकपिण्डाः पृथक्शौचाः।

### [ आशौचे वर्ज्यम् ]

750. दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च।
प्रेतपिण्डक्रियावर्जमा[1]शौचे विनिवर्तते॥

---

746. प०सं०मा०, (v.I.11), p. 24.

747. का०त०वि०रघु०, II, p. 463-464 [1 ततः; 2 तु (for अपि).; 3 तथा]; का०द०, fol. 51; का०सा०गदा०, (I), p. 263; च०चि०हे०, p. 530 (3 तथा (for अहनि)]; नि०सि०क०, p. 417; पु०चि०वि०, p. 490; म०पा०मद०, (VII), p. 417; पु०चि०वि०, p. 490; म०पा०मद०, (VII), p. 618; या०स्मृ०अ०, I.251, p. 523; या०स्मृ०बा०, I.252, p. 581; या०स्मृ०मि० I.256, p. 77; वी०मि०मि०मि०, p. 213; शू०क०क०, p. 58; श्रा०म०नी०, p. 76; शू०शि०शेष०, p. 209; स्मृ०कौ०मद०, fol. 78; स्मृ०मु०वै०, p. 619.

748. प०सं०मा० (v.I.11), p. 231 [reads अग्निहोत्राद्यनुष्ठानार्थं स्नात्वोपस्पर्शनात्तत्कालं शौचम्]; म०स्मृ०कु०, (v.84), p. 211 [om. एव]; या०स्मृ०शू०, III.17, p. 76; स्मृ०मु०वै०, p. 479 and p. 505 [both स्पर्शनान्तं तत्कालं शौचम्); हा०अ०, p. 7.

749. या०स्मृ०वि०, (2), p. 13.

750. का०सा०गदा०, (I), p. 261 [1 अशौचे]; कृ०क०ल० (X), p. 22 [ अशौचे विनिवर्तयेत्]; नि०सि०क०, p. 410; पु०चि०वि०, p. 523; प्र०पा०नृ०, p. 158; वी०मि०मि०मि०, p. 192; शु०कौ०गो०, p. 4 [ 1 सूतके; also अशौचे]; & p. 13 [1 सूतके]; शु०र०च०, fol. 4; शु०वि०रु०, p. 5 [1 अशौचे]; स्मृ०मु०वै०, p. 477 [subst. for cd. प्रेतकर्मक्रियायज्ञमाशौचे विनिवर्तयेत्]; हा०अ०, p. 26 [1 सूतके].

## आपद्धर्मप्रकरणम्

751. शङ्खलिखितौ आपत्काले ब्राह्मणस्य[1] मातापितृमतो बहुभृत्यस्यानन्तरिका वृत्तिरिति विकल्पः।[2] तत्र[3] ब्राह्मणेषु [4]चरित्रगुणसंपन्नवृत्तेर्दौर्बल्यमाख्यातम्।[5] यद्ब्रूयुस्ते स धर्मः। तस्यानन्तरा[6] वृत्तिः[7] क्षात्रोऽभिनिवेशः। त्रयाणां[8] व्यावृत्तौ याज्ययाजनाध्यापनप्रतिग्रहाणामेवमप्यजीवन्वैश्य[9] वृत्तिमेवोपजीवेत्।

752. शङ्खलिखितौ तस्य स्वधर्म एव श्रेयान्स्वल्पोऽप्यनुष्ठितो नावरं[1] सेवेत। जघन्यसेवी[2] हि ब्राह्मणो जघन्ये[3]ष्ववपद्यते तस्मात्प्रशस्तसमयाचारं[4] सर्वतः प्रतिगृह्णीयान्नात्मनस्तु[5] ततस्तृप्तिमिच्छेत्। कामं त्रयाणां वर्णानां याजनं कुर्वीत[6] धर्मेण[7] तेभ्यो वृत्तिमादाय धर्मकृत्येषूपहरेत्।

753. शङ्खलिखितौ [1]शुष्ककाष्ठबदरेङ्गुदबिल्वरज्जु[2]कार्पासिक[3]सूत्रैरविकृतैर्द्रव्यमाहरेत्।

---

751. कृ०क०ल०, (II), p. 186-187 [3 तत्र ब्राह्मणे मातापितृषु चरित्रगणसम्पन्नेषु; 6 om from तस्या upto वृत्तिः; 8 om. यास्य]; गृ०र०च०, p 425; या०स्मृ०अ०, III.34, p. 930 [1 om. ब्राह्मणस्य; 2 कल्पः; 4 त्रिगुणसम्पन्नेषु वृत्ति-; 5 आख्येयम्; 7 °रिका; 8 त्रयाणां ब्राह्मणकर्मणां वा वृत्तिर्याजना; 9 वैश्यमुपजीवेत्].

752. कृ०क०ल०, (II), p. 185 [1 °वर सेवित; 3 °षूपपद्येत; 5 om. तु]; प्रा०वि०शू०, p. 409 [1 नु तु परं; 3°षूपजायते; 4 समयाभावः; 5 om. तु० 6 कुर्यात्; 7 om. धर्मेण; adds ऋष्वर्धम् at the end.]; या०स्मृ०अ०, III. 34, p. 929 [2 जघन्यतासेवी].

753. कृ०क०ल०, (II), p. 292 [1 शुद्धः; 2 om. रज्जु]; या०स्मृ०अ०, III. 38, p. 933; या०स्मृ०बा०, III.38, p. 84 [2 om. बिल्वरज्जु; 3-सूत्रकृतं न व्यवहरेत्].

754. शङ्खलिखितौ आपदि[1] कामं ब्राह्मणो जिजीविषुरेकान्तरितां वृत्तिमास्थाय न[2] पण्यं पण्यमिति ब्रूयात्। सकृदेवोक्तं[3] मूल्यमिच्छेत्। गां[4] वा रक्षेत्। तासु नापीतासु[5] पिबेत्। न तिष्ठन्तीषूपविशेत्। न स्वयमुत्थापयेत्। शनैरार्द्रशाखया[7] सपलाशया[8] पृष्ठतोऽभिहन्यात्।[9] नातीर्थी न[10] विषमेणाल्पोदकेन[11] वा तारयेत्। बालवृद्धरोगार्ताः[12] श्रान्ता[13] उपविशयेत्। शक्तितः प्रतीकारं[14] कुर्यात्। गवामेष[15] धर्मोऽन्यथा विप्लवः।[16]

755. शङ्खलिखितौ न विक्रीणीयादविक्रेयाणि। तिलदधिक्षौद्र[1]लवणलाक्षा[2]मद्यमांसकृतान्नस्त्रीपुरुषहस्त्यश्वगोवृष[3]गन्धरसक्षौम[4]कृष्णाजिनसोमोदकनीलविक्रयात्[5] सद्यः पतति ब्राह्मणः।

756. शङ्खलिखितौ एवमप्यजीवन् वैश्यवृत्तिमेवोपजीवेत्तत्र संवत्सरसत्राणामाधारमुद्धृत्य शेषेण द्रव्यमाहरेत्। अन्यत्र

---

754. कु०क०ल०, (II), p. 212 [1 आपद्गतो; transp. कामं and ब्राह्मणो; 2 om. न; 3 सकृरैवकं मूल्यमिच्छेत्; om. further]; remaining on p. 213 [4 गावो; 8 om. सपलाशया; 11 °नाल्पोदके चावतारयेत्; 13 शान्ता उपासीत; 14 adds च after कुर्यात्]; गृ०र०च०, p. 443 [reads from गावो तासु पीताशु पिबेत्। अवतिष्ठन्ती °; 7 adds न; 11 नान्यो°_ 12-वृद्धकृशरोमार्ताः शान्ता उपासीतः]; नि०प्र०नृ०वाज०, p. 312 [1 आपद्गतो; कामं and ब्राह्मणो transp.]; & p. 325 [reads further; 4 om. वा; 5 पीतासु; 6 om. न; 8om. सपलाशया; 16 यथाभिप्लवः]; [again reads from गा रक्षेत्; 5तास्वपीतासु; 6 तिष्ठत्सूप; 1० न तीर्थे; 12 वृद्धरोगार्तानां शक्तिः; 15 गवामेष धर्मः]; या०स्मृ०अ०, III. 39. p. 934; स्मृ०च०दे०, (I), p. 170 [reads from गा रक्षेत्; 5 तास्वपीतासु; 9 om. अभि; 11 °ल्पोदकेऽवतारयेत्; उश्रान्तः उपासीत]; स्मृ०र०वें०, p. 123 [reads from गा०रक्षेत्; रक्षन् (for रक्षेत्); 5 तास्वपीतासु; 7 ताः शनैः; 12 रोगातुराः श्रान्ताः उपासीत].

755. कृ०क०ल०, (II), p. 206; गृ०र०च०, p. 439; प्रा०म०नी०, p. 12 [1 तिलतैल, 2 द्राक्षा; 3 om. गो; 4 इति उपक्रम्य; adds वत्सरं तप्तकृच्छ्रमाचरेत्]; स्मृ०च०दे०, (I), p. 180 [from तिल; 3 om. गो; 4 om. क्षौम; 5 om. नीलविक्रयाः].

756. कृ०क०ल०, (II), p. 201.



पुष्परसगन्धमद्यमांसौदनतिलशाककदधिपयःसोमजलमधुनीलकौशेयपानभक्ष्यजतुलोहपाषाणकुतपशस्त्रविषमानुषक्षौमकृष्णाजिनैकशकप्रभृतिभ्यः।

## [ वानप्रस्थधर्मप्रकरणम् ]

757. शङ्खलिखितौ पुत्रानुत्पाद्य[1] संस्कृत्य वेदमध्याप्य वृत्तिं[2] विधाय दारैः संयोज्य गुणवति पुत्रे कुटुम्बमावेश्य कृतप्रस्थानलिङ्गो वृत्तिविशेषाननुक्रमेत्।[3] क्रमशो यायावराणां वृत्तिमुपास्य वनमाश्रयेदुत्तरायणे पूर्वपक्षे।[4]

758. शङ्खलिखितौ स्वपन्तं पुत्रमाहूय ज्ञातव्यम्।

759. शङ्खः गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः।
अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत्॥

760. शङ्खः पुत्रे दारान्विनिक्षिप्य तथा वानुगते वने।
अग्निमुपाचरेन्नित्यं वन्यमाहारमाहरेत्॥

761. शङ्खः यदाहारो भवेत्तेन पूजयेत्पितृदेवताः।
तेनैव पूजयेद्विद्वानतिथिं समुपागतम्॥

762. शङ्खः ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान्समाहितः।

763. शङ्खः स्वाध्यायं च तथा कुर्याज्जटाश्च बिभृयात्तथा।

---

757. कृ०क०ल०, (XIV), p. 12-13 [adds तेभ्यो० before वृत्तिं; 3 विशेषार्थमुत्क्रामेत्; 4 °यणपूर्यपक्षे]; प०सं०मा०, (v.I.11), p. 139-140 [3 °नुक्रामेत्]; या०स्मृ०अ०, III. 44, p. 940; या०स्मृ०वि०, I. 127, p. 105 [अत ऊर्ध्वं पुत्रानुत्पाद्येत्युपक्रम्य क्रतुपस्थानलिङ्गे वृत्तिविशेषानुक्रमः श्रेयान् यायावराणां वार्तामुपास्य वनमाश्रयेद्].

758. ध०ल० (व्य०)., p. 1922; स०वि०प्र०, (व्य०), p. 498.

759. म०पा०, p. 364.

760. या०स्मृ०बा०, III. 45, p. 88.

761. या०स्मृ०बा०, III.46, p. 89.

762. या०स्मृ०बा०, III.55, p. 93.

763. या०स्मृ०बा०, III.49, p. 91.

764. शङ्खः तपसा शोषयेन्नित्यं स्वकं चैव कलेवरम्।
आर्द्रवासास्तु हेमन्ते ग्रीष्मे पञ्चतपास्तथा॥
प्रावृष्याकाशशायी च नक्ताशी च सदा भवेत्॥

765. शङ्खः चतुर्थकालिको वा स्यात्षट्कालिक एव वा।
कृच्छ्रैर्वापि नयेत्कालं ब्रह्मचर्यं च पालयेत्।
एवं नीत्वा वने कालं द्विजो ब्रह्माश्रमी भवेत्॥

766. शङ्खः ऊर्ध्वं वार्षिकाभ्यां मासाभ्यां नैकस्थानवासी।

767. शङ्खः नाग्निशुश्रूषया दान्त्या स्नानेन विविधेन च।
वानप्रस्थो दिवं याति याति भोजनवर्जनात्॥

---

764. या०स्मृ०बा०, III.52, p. 92.

765. कृ०क०ल०, (XIV), p. 27 [om. l.1]; या०स्मृ०बा०, III.50, p. 92 [om. l.3]

766. या०स्मृ०मि०, III. 58, p. 201; स्मृ०त०र० (तिथि);, p. 112; स्मृ०मु०वै०, p. 190.

767. कृ०क०ल०, (XIV), p. 28.

## यतिधर्मप्रकरणम्

768. शङ्खलिखितौ अक्रोधम् आर्जवं शौचं व्यवहारो गुरुशुश्रूषा चेति नियमाः पञ्च।

769. शङ्खः काले शक्तितः शरीरं शोषयेद्यमनियममन्त्रोपवासादिभिः। कुशचीरचर्मवल्कलवासा जटी कृष्णाजिनोत्तरीयो जलशयनपञ्चतपाभ्रावकाशनियमपरः।

770. शङ्खः अशुचित्वशुचित्वस्य प्रियाप्रियविपर्ययान्।
गर्भवासे च वसतिं पश्येन्मुच्येत नान्यथा॥

771. शङ्खः प्राग्रात्रापररात्रेषु योगी नित्यमतन्द्रितः।
ध्यायेत्तु पुरुषं विष्णुं निर्गुणं पञ्चविंशकम्॥

772. शङ्खः मनः संयमनात्त[1]ज्ज्ञैर्धारणेति निगद्यते।

773. शङ्खः यथा पृथिव्यां बीजानि रत्नानि निधयो तथा।
एवमात्मनि कर्माणि तिष्ठन्ति प्रभवन्ति च॥

774. शङ्खः एकरात्रं वसेद्ग्रामे नगरे पञ्चरात्रकम्।
वर्षोभ्योऽन्यत्र वर्षासु मासाश्च चतुरो वसेत्॥

775. शङ्खः त्रिदण्डकुण्डी पक्ष्मपवित्रप्रयोजनापेक्षी, मुण्डः

---

768. कृ०क०ल०, (II), p. 303.

769. या०स्मृ०अ०, III.51, p. 944.

770. या०स्मृ०अ०, III.63, p. 968.

771. या०स्मृ०अ०, III. 63, p. 970.

772. कृ०क०ल०, (XIV), p. 174 [1 संयमवं]; या०स्मृ०अ०, III. 201, p. 1025.

773. गौ०ध०सू०, p. 305 [1 च पयोविधौ]; नृ०प्र०दल० (प्रा०), चण 22, प०सं०मा०, (v.II.1), p. 11.

774. का०सा०गदा०, (I), p. 36.

775. कृ०क०ल०, (XIV), p. 47; स्मृ०मु०वै०, p. 193 [पर्यटनशीलः स्यादात्मज्ञानार्थं तदवाप्तो धर्मैकस्थान इति तदभ्यासपरो नैकत्र देशे मूत्रपुरीषौ].

काषायवासा, भैक्ष्यवृत्तिरसंविभागरुचिरभिशस्त-पतितनिन्दितोपकृतवर्जी कौपीनमात्रवासा व्रणमात्र-लेपनपरितुष्टः पक्वकाषायः, कालाकाङ्क्षी सदायुक्तआत्मरतिरसंविधानशीलः, कुहककल्कदम्भापवर्जितः, सदा नैकग्रामवासी, सङ्गदोषात् पर्यटनशीलः, सदात्मज्ञानविवेकार्थकुशल ऊर्ध्वं वर्षाभ्यो नैकदेशमूत्रपुरीष उद्धृतपरिपूताभिरद्भिः कार्यं कुर्यात्। दण्डपवित्रपाणिः द्विपरिधानी कुशचीरवरफुलकवासो शीतप्रावरणमेकम्।

776\. शङ्खलिखितौ शीतोष्णवातवर्षाणि नात्यन्तं परिहरेत्। नात्मनः प्रतीकारं कुर्यात्। न कारयेन्नानुमन्येत।

777\. शङ्खः सप्तागारं चरेद्भिक्षां भिक्षुकं नानुभिक्षयेत्।
नास्वादयेद्रसनया नाश्नीयात्कस्यचिद्गृहे॥

778\. शङ्खलिखितौ भिक्षमाणो वा निमित्तान्तरं ब्रूयात्। न रङ्गावतारं कुर्यात्। न स्त्रीं नाप्राप्तव्यवहारानपर्याप्तसन्निधानाननुद्दिश्यान्नं भिक्षेत्।

779\. शङ्खः संन्यस्याचार्यमुपतिष्ठेत् ब्रह्मजिज्ञासायाम्।

780\. शङ्खलिखितौ काष्ठालाबुविदलपार्थिवानामेकभैक्षभाजनम्। न[1] तस्य गोवालरज्ज्वा सोदकं परिघर्षणम्। प्रात्यात्मिकं[2] शौचम्। नात्राचामेन्न भूमौ निक्षिपेत्। नाशुचिः संस्पृशेत्। भुक्त्वा चान्तः पुनराचम्य द्रव्याण्यभ्युक्षयेद्युक्तं[3] यच्चान्यदविरुद्धं स्यात्।

---

776\. कृ०क०ल०, (XIV), p. 48.

777\. कृ०क०ल०, (XIV), p. 57.

778\. गृ०र०च०, p. 457.

779\. या०स्मृ०बा०, II.137, p. 244.

780\. कृ०क०ल०, (XIV), p. 60; या०स्मृ०अ०, III.59, p. 965 [1 om. न; 2 °त्मकं; 3 रज्जुं (for युक्तं).].



781\. शङ्खलिखितौ वनवासादूर्ध्वं शान्तस्य परिणतवयसः[1] कामतः प्रव्रज्या,[2] तमेवाग्निमात्मन्यारोप्य व्यपगतभयलोभ[3]मोहक्रोधशोकद्रोहमदमत्सरः काल[4] नानुचिन्तयेदनवस्थिततत्वान्मनसः श्रद्धा ह्यनियता भवति। तस्मान्न श्वः श्वः समुपासीत्।[5] तदहरेव संन्यसेत्सर्वारम्भपरिग्रहानुत्सृज्य।

782\. शङ्खः पृथिव्यापस्तथा तेजो वायुराकाशमेव च।
पञ्चैतानि विजानीयान्महाभूतानि पण्डितः॥
श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च।
बुद्धीन्द्रियाणि जानीयात् पञ्चैवास्मिन्शरीरके॥
मनो बुद्धिस्ततश्चात्मा अव्यक्तं च तथैव च।
इन्द्रियेभ्यः पराण्याहुश्चत्वारि कथितानि तु॥
शब्दं रूपं तथा स्पर्शं रसं गन्धं तथैव च।
इन्द्रियार्थं विजानीयात् पञ्चैव सततं बुधः॥
हस्तपादावुपस्थं च जिह्वा पायुस्तथैव च।
कर्मेन्द्रियाणि पञ्चैव नित्यमस्मिन्शरीरके॥
चतुर्विंशतितत्त्वानि एतानि कथितानि तु।
तथात्मानं तु तं विद्धि पुरुषं पञ्चविंशकम्॥
वालाग्रशतिमो भागः कल्पितस्तु सहस्रशः।
तस्यापि शतिमाभागाज्जीवः सूक्ष्म उदाहृतः॥

783\. शङ्खः हृत्स्थस्य ध्यानयोगेन देवदेवस्य दर्शनम्।
ध्यानं प्रोक्तं प्रवक्ष्यामि ध्यानयोगमतः शुभम्॥

---

781\. कृ०क०ल०, (XIV), p. 31, [2 परिव्रज्य; 3 om. वि; 5 उपासीत]; च०चि०हे० (परि०), p. 804 [2 परिव्रजनमेवा °; 4 कलत्रस्योचितवेदनावस्थितमनसः श्रद्धाद्यनियतं भवति। तस्मात्तदहरेवोपासीत। यदहरेव संन्यं °]; म०स्मृ०कु० IV. 33, p. 234 [1 परिगतवयसः परिव्राज्यम्; om. further]; या०स्मृ०अ०, III. 56, p. 947.

782\. कृ०क०ल०, (XIV), p. 112.

783\. कृ०क०ल०, (XIV), p. 193.

हृदिस्था देवताः सर्वा हृदि प्राणः प्रतिष्ठितः।
हृदि ज्योतींषि सूर्यश्च हृदि सर्वं प्रतिष्ठितम्॥
स्वदेहमरणिं कृत्वा प्रणवं तूत्तरारणिम्।
ध्याननिर्मन्थनाभ्यासाद्विष्णुं पश्येद् हृदिस्थितम्॥
रविमध्ये स्थितः सोमः सोममध्ये हुताशनः।
तेजो मध्ये स्थितं सत्त्वं सत्त्वमध्ये स्थितोऽच्युतः॥
अणोरणीयान्महतो महीया-
नात्मा गुहायां निहितोऽस्य जन्तोः।
तेजोमयं पश्यति वीतशोको
धातृप्रसादान्महिमानमीशम्॥
एष देवस्तु मर्त्यानां पटैरिव विधीयते।
अज्ञानपटसंवीतैरिन्द्रियैर्विषयैः श्रुतिः॥

एष वै पुरुषो विष्णुर्व्यक्ताव्यक्तः सनातनः।
एष धाता विधाता च प्रधानं निष्कलः शिवः॥
वेदाहमेतं पुरुषं महान्त-
मादित्यवर्णं तमसः परस्तात्।
तं वै विदित्वा न बिभेति मृत्यो-
र्नान्यः पन्था विद्यतेऽयनाय॥

# प्रायश्चित्तप्रकरणम्

## [ कर्मविपाकाः ]

784. शङ्खलिखितौ कुम्भीपाक-रौरव-महारौरव-कूटशाल्मलि-शिला-संघात-वज्रकण्टकशयनान्यसिपत्रवनान्ययस्तुण्डाः पक्षिणः पूयशोणितकर्दमः केशकश्मलशैवालाः क्षारनद्यो ज्वलिताङ्गारकुण्डास्तप्तकरम्भवालुकानि-स्त्रिंशमुद्गरनिपाताः सूचिप्रतोदवेध्यः अल्पोदकाः साग्निगर्ताः प्रदीप्तायःपिण्डलोहकण्टकशयनानि नरकपञ्जराणि कालसूत्राणि तीक्ष्णाग्राश्च शूलाः श्यावशवलौ वज्रदंष्ट्रिणौ तप्तोदका वैतरणी एतेषु पच्यन्ते पापकर्मिणः।

785. शङ्खलिखितौ अत ऊर्ध्वं बहूनि वर्षसहस्त्राणि यमविषये कुम्भी-पाकरौरवादिषु स्थानेषु दुःखान्यनुभूयेह जातानामिमानि लक्षणानि भवन्ति। तद्यथा ब्रह्महा कुष्ठी गोघ्नश्चान्धोऽनेकरोगिणश्च।

786. शङ्खलिखितौ सुवर्णस्तेयी कुनखी वस्त्रापहारी श्वित्री। हिरण्यापहारी दद्रुणः। तेजसापहारी मण्डली। स्नेहापहारी क्षयामयी अजीर्णवानन्नापहारी। वागपहारी मूकः। गृध्रो देवद्रव्योपजीवकः। पाण्डुरोगी दीपहारी। ब्राह्मणवृत्तिघ्नश्च दरिद्रः। कर्मफलविशेषेण कुब्जषण्ढपङ्गुदरिद्राश्च जायन्ते।

787. शङ्खः ब्रह्महा कुष्ठी। तैजसापहारी[1] मण्डली। देवब्राह्मणा-

---

784. म०पा०मद०, (IX), p. 695.
785. प०सं०मा०, (v.II.11), p. 24८.
786. प०सं०मा०, (v.II.11), p. 263.
787. गौ०ध०सू०, (परि०) [6 शब्दभेदी; 7 भगभक्षः कुण्डाशी; 1० स्वापहारी; 15

क्रोशकः खलतिः। गरदाग्निदावुन्मत्तौ।[2] गुरुं प्रति-
हनतापस्मारी।[3] गोघ्नश्चान्धः।[4] धर्मपत्नीं[5] मुक्त्वान्यत्र
प्रवृत्तः शब्दवेधी[6] प्राणिविशेषः। कुण्डाशी[7] भगभक्षो[8]
देवब्राह्मणस्वापहारी[9] पाण्डुरोगी। न्यासापहारी[10]
काणः। स्त्रीपण्योपजीवी[11] षण्ढः। कौमारवारत्यागी
दुर्भगः। मिष्टैकाशी वातगुल्मी। अभक्ष्यभक्षको
गण्डमाली। ब्राह्मणीगामी[12] निर्बीजी। क्रूरकर्मा[13]
वामनः। वस्त्रापहारी[14] पतङ्गः। शय्यापहारी[15]
क्षपणकः। शङ्खशुक्तापहारी कपाली। दीपापहारी
कौशिकः। मित्रध्रुक् क्षयी। मातापित्रोराक्रोशकः
कारण्डकः[16] इति।

788. शङ्खलिखितौ वेश्यापहारी अद्रिसर्पः। परजालापहारी शिशुमारः।
सस्यापहारी कपोतः। क्रव्यापहारी वायसः। ताम्राप-
हारी वल्गुलः। अपूपापहारी प्रेतः। शास्त्रापहारी जडः।
छत्रापहारी कारण्डवः। गन्धापहारी पतङ्गः। ध्वजाप-
हारी कृकलासः। शाकापहारी पशुः। शय्यापहार्य-
शयनः। पुष्पापहारी दुर्गन्धी। फलापहार्यफली। दीपा-
पहारी कौशिकः। भूम्यपहारी नकुलाहिबिडाला-
खूनामन्यतमः। इति।

---

adds चित्री च; 16 करभोदरः]; नृ०प्र०दल०, p. 220 [2 adds दुर्मतिर्वा; 3 om. प्रति; 4 गोहन्ताअन्धः। धर्मपत्नीपरित्यागेनान्यत्र गन्ता; 7 om. from कुण्डा to क्षो०; 9 स्वापहर्ता; 1० न्यासापहर्ता; 12 om. from ब्राह्म °to वामनः; 14 वस्त्रापहर्ता; hence reads °हर्ता in place of °हारी; om. from. मित्रध्रुक्; onwards]; & p. 222 [reads ब्रह्मा कुष्ठी गोहा अन्धः। अनेकारोगी वा। भ्रूणहा कुनखी। परदुःखदायी नित्यान्धः। परापकारविरतो दीर्घरोगी। दृष्ट्युपहर्ता अन्धः। श्रोतापहर्ता बधिरः। वाचोऽपहर्ता मूकः]; प०सं०मा०, p. 253 [reads only अभक्ष्यभक्षी गण्डमाली]; म०पा०मद०, p. 701-702 [3 गुरुप्रतिज्ञा; 8 °भक्ते, 16 खण्डनकारः]; या०स्मृ०मि०, III. 216, p. 233 [9 देवब्रह्मस्वहरः; 1० च काणः; 16°राक्रोशः खण्डनकारः]; स्मृ०मु०वै०, p. 861 [1 तैजसहारी; 5 adds क्रतौ after धर्मपत्नीं; 8 दंशभक्षः; 11 स्त्रीवैश्योपजीवी; 13 निर्बीजः].

788. प०सं०मा०, (v.II.11), p. 260.



यद्वा तद्वापि पारक्यं स्वल्पं वा यदि वा बहु।
हृत्वा वै योनिमाप्नोति तत्तद्भोगानुरूपतः॥

789. शङ्खलिखितौ पर्वमैथुनी प्रमेही। पुरुषव्याधिपीडितः। परदारगाम्य-
गुप्तदारः। गोष्ववकीर्णी दुश्चर्मा। खराभिगामी मूत्रमेही।
सगोत्राभिगामी मद्यपरस्त्रीगामी च श्लीपदी।
मातृपितृभगिनीगाम्यबीजी। धर्मपत्न्यामास्ये प्रवर्तकः
खल्वाटः। भ्रातृभगिनीगाम्यवकीर्णी श्लीपदी वध्री
मधुमेही च।

[ महापातकप्रायश्चित्तानि ]

790. शङ्खलिखितौ ब्रह्महा त्रिरात्रोपोषितोऽन्तर्जलेऽघमर्षणं त्रिरात्रमावर्त-
येत्। गुरुतल्पगः पवित्रमृषभः सुवर्णस्तेयी रुद्राध्यायी
सुरापो मध्याह्ने कुष्माण्डैर्घृतहोमं कुर्यात्। हिरण्य-
स्तेनचतसृभिर्हिरण्यवर्णाभिरात्मानमभ्युक्ष्य हिरण्य-
मप्सु निदध्यात्।
लोमभ्यः स्वाहेत्यथवा दिवसं मारुताशनः।
जले स्थित्वाभिजुहुयात् चत्वारिंशद् घृताहुतिः॥

[ संप्रयोगः पञ्चमं महापातकम् ]

791. शङ्खः तैश्च सह संप्रयोगश्च पञ्चमः पातकी।

[ उपपातकानि ]

792. शङ्खः अत ऊर्ध्वमुपपतनीयानि—कन्यादूषी सोमविक्रयी

---

789. प०सं०मा०, (v.II.11), p. 270; नृ०प्र०दल०, p. 224 [reads पर्वमैथुनी प्रमेही। परदाराभिगामी पुरुषव्याधिनाम्। अश्वाभिगामी दुश्चर्मा। सगोत्राभिगामी मधुमेही। मद्यपरस्त्रीगामी ह्यपदी। मातृपितृभगिनीगामी अबीजी। स्वदारान्यक्रीडाकर्ता अल्पकेशी। गुरुतल्पगो दुश्चर्मा। सगोत्रागामी ह्यबीजी].

79०. नृ०प्र०दल०, p. 165 [om. from गुरु upto निदध्यात्]; प०सं०मा०, (v.II.11), p. 163 [as नृ०प्र०, om. st.]; या०स्मृ०अ०, III.311, p. 1218, [om. st.].

791. या०स्मृ०वि० (2), p. 136.

792. या०स्मृ०वि० (2), p. 93 & p. 95 [reads upto °नीयानि].

वृषलीपतिः कौमारदारत्याग्यसुरामद्यपायी गोघ्नः शूद्रवधी गुरोः प्रतिहन्ता नास्तिकः कृतघ्नः कूटव्यवहारी वृत्तिघ्नो मिथ्याभिशंसी हिरण्यस्तेनः पतितसंव्यवहारी मित्रध्रुक् शरणागत- घाती प्रतिकूलवृत्तिरित्येतान्यष्टादशैवोपपातकानि।

793. शङ्खलिखितौ कृतघ्नः कूटव्यवहारी ब्राह्मणवृत्तिघ्नो मिथ्याभिशंसी पतितात्यागी अभोज्यभोजी असत्प्रतिग्रही।

[ प्रायश्चित्तहेतवः ]

794. शङ्खलिखितौ कृच्छ्राणि द्विजातीनामेव नावरस्य कामं धर्मेच्छोर-प्रतिषेधः।[1]

795. शङ्खलिखितौ साधारणो हि धर्मो नियमाश्च अवरस्य शूद्रस्य वेदमन्त्रसहितस्य प्रायश्चित्तस्य निषेधः तद्रहितस्या-भ्यनुज्ञा। यदा रागद्वेषादलभ्यमानेषु प्रायश्चित्तेषु यज्ञहवनाध्ययनब्रह्मचर्यपरो भैक्ष्याशी दण्डी मेखली स्वयमेव संवत्सरेण महापापतत्परो व्यपोहति इति किल्बिषा न ब्राह्मणस्य पतनमिच्छन्त्वाचार्याः।

[ प्रायश्चित्तनियमाः ]

796. शङ्खः प्रायश्चित्तमुपासीनो वाग्यतस्त्रिरुपस्पृशेत्।
एकवासा[1] आर्द्रवासा लघ्वाशी[2] स्थण्डिलेशयः॥

793. स्मृ०मु०वै०, p. 866.

794. म०पा०मद०, (IX), p. 780 [1 धर्मेप्सोर्]; प्रा०म०नी०, p. 2 [1 धर्मेप्सोर्]; या०स्मृ०बा०, III.27, p. 205 [कृच्छ्राणां; 1 धर्मस्यानिषेधः]; या०स्मृ०शू०, III.262, p. 100.

795. प्रा०म०नी०, p. 2 [reads upto नियमश्च]; म०पा०मद०, (IX), p. 780 [upto [अ]भ्यनुज्ञा]; या०स्मृ०बा०, III.27, p. 205.

796. नृ०प्र०दल०, p. 202 [om. ,l.1; 1°सार्द्धवासा वा]; म०पा०मद०, (IX), p. 749 [om. l.1; 2 adds वा before °ल]; या०स्मृ०अ०, III.313, p. 1229; या०स्मृ०मि०, III.326, p. 339 [om.l.1; 2 adds वा before ल]; स्मृ०त०र०, p. 471 & p. 515 & p. 621 [om.l.2].



[ यमनियमाः ]

797. शङ्खः नित्यं त्रिषवणस्नायी कृत्वा पर्णकुटीं वने।
अधःशायी जटाधारी पर्णमूलफलाशनः॥
ग्रामं विशेच्च[1] भिक्षार्थी[2] स्वकर्म[3] परिकीर्तयन्।
एककालं समश्नानो[4] वर्षे तु[5] द्वादशे गते॥
रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः।
व्रतेनैतेन[6] शुध्यन्ति महापातकिनस्त्विमे॥

798. शङ्खः स्वयं व्रतमभ्युपगम्य चोरवल्कलवासा अधःशायी।

799. शङ्खः वाप्य[1] केशनखान्पूर्वं घृतं प्राश्य बहिर्निशि।
प्रत्येकं नियतं कालमात्मनो व्रतमादिशेत्॥

800. शङ्खः स्थानवीरासनी[1] मौनी मौञ्जी दण्डकमण्डलू।
भैक्ष्यचर्याग्निकार्यं च कुष्माण्डैर्जुहुयाद्[2] घृतम्॥

801. शङ्खः अभुक्त्वा प्रातराहारं ज्ञात्वाचाम्य समाहितः।
सूर्याय देवताभ्यश्च निवेद्य व्रतमाचरेत्॥

797. गौ०ध०सू० (परि०), p. 36 [om.l.1; l.3; 4 समश्नीत]; नृ०प्र०दल० p. 55 [as गो०ध० 4 समश्नीत]; प०सं०मा०, (v.II.1), p. 99, 2 भिक्षार्थं; 4 समस्थानो; 5 च (for तु).]; & p. 320 [om. l.1 & l.3]; प्रा०प्र०भ०, p. 43. [om. l.1 & l.3]; & p. 74 [om. l.1 & l.3]; p. 81 & 82 [om. l.1-4]; प्रा०म०नी०, p. 34. [1 वा (for च); 3 परिकीर्तयेत्; 5 वर्षे द्वादशमे गते]; p. 73 [om. l.1 & l.3; 4 समश्न वै]; प्रा०वि०शू०, p. 97 [om. l.1 & l.3; 4 समश्नानी]; या०स्मृ०अ०, III. 243, p. 1053; या०स्मृ०अ०, III. 260, p. 1084 [om. l.1 & l.3; 4 समश्नन्वै; 6 व्रतेनानेन]; या०स्मृ०मि०, III.259, p. 268 [om. l.1 & l.3; 4 समश्नीत].

798. या०स्मृ०अ०, III.299, p. 120.

799. प्रा०त्रि०शू०, p. 504; या०स्मृ०अ०, III.313, p. 1229 [1 न्युप्य]; स्मृ०त०र०, p. 471; & p. 515 & p. 621 [om. l.1].

800. नृ०प्र०दल०, p. 28 [2 °ण्डिभिः सदा जप]; प्रा०म०नी०, p. 7 [1 स्थानवीरासनी मौनी]; प्रा०वि०शू०, p. 504; म०पा०मद०, (IX), p. 788 [om.l.2]; या०स्मृ०अ०, III.313, p. 1229 [1 स्थानं वीरासनं मौनं]; या०स्मृ०मि०, III.243, p. 246 [2 °ण्डिभिः सदा जप]; या०स्मृ०वि०शू०, p. 504 [1 °ण्डिभिः सदा].

801. या०स्मृ०अ०, III. 313, p. 1229.

[ व्रतनियमा: ]

802. शङ्खः नित्यं सदा यावदायुर्न कदाचिदतिक्रमेत्।
उपेत्यातिक्रमे दोषश्रुतेरत्यागदर्शनात्॥
फलाश्रुतेर्वीप्सया च तन्नित्यमिति कीर्तितम्।
तस्मात्कर्तव्यमेवेह प्रायश्चितं विशुद्धये॥

803. शङ्खः तस्करश्वापदाकीर्णे बहुव्यालमृगे[1] वने।
न व्रतं ब्राह्मणः[2] कुर्यात्प्राणबाधाभयात्सदा॥

804. शङ्खः सर्वतो जीवितं रक्षेज्जीवन्पापं व्यपोहति।
व्रतैः कृच्छ्रैस्तथा दानैरित्याह भगवान्यमः॥

805. शङ्खः शरीरं धर्मसर्वस्वं[1] रक्षणीयं प्रयत्नतः।
शरीरात्स्रवते धर्मः पर्वतात्सलिलं[2] यथा॥

806. शङ्खः अन्तरा ब्राह्मणं कृत्वा व्रतमेषां समादिशेत्।
तथा शूद्रं समासाद्य सदा धर्मपुरःसरम्॥
प्रायश्चितं प्रदातव्यं वेदमन्त्रविवर्जितम्॥

[ वपनम् ]

807. शङ्खः गोघ्नः पञ्चगव्याहारः पञ्चविंशतिरात्रमुपवसेत्सशिखं[1] वपनं कृत्वा गोचर्मप्रावृत्तो[2] गा अनुगच्छेद्गोष्ठे[3] वसेद् गोप्रदानं च।[4]

---

802. स्मृ०त०र०, p. 473.
803. म०पा०मद०, p. 781; या०स्मृ०अ०, III. 313, p. 1231; या०स्मृ०बा०, III. 327, p. 206 [1 वक्तव्योक्त; 2 ब्राह्मणस्य].
804. या०स्मृ०अ०, III.313, p. 1231; स्मृ०सा०वि०, p. 351.
805. प्रा०वि०शू०, p. 280; म०पा०मद०, (IX), p. 781; या०स्मृ०अ०, III.313, p. 1231 [1 संयुक्तं]; या०स्मृ०बा०, III. 327, p. 206 [2 एवं मूले पक्षयामश्रणामन:].
806. या०स्मृ०बा०, III. 327, p. 206.
807. प०सं०मा०, (v.II.1), p. 243 [2 गोचर्मणा; 3 माश्वानुगच्छन् गोष्ठेशयो गां दद्यात्]; या०स्मृ०अ०, III. 265, p. 1094; या०स्मृ०मि०, III.264, p. 277 [reads as प०सं०मा०; 4 च दद्यात्]; या०स्मृ०वि० (2), p. 147 [1 रात्रं तिष्ठेत्; 2 गोचर्मणा; च कुर्यात्]; या०स्मृ०शू० III.263, p. 100 [reads upto उपवसेत्].



808. शङ्खः राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः।
केशानां वपनं कृत्वा प्रायश्चित्तं समाचरेत्॥

809. शङ्खः केशानां रक्षणार्थं[1] तु द्विगुणं व्रतमाचरेत्।
द्विगुणे व्रत आचीर्णे दक्षिणा द्विगुणा भवेत्॥

810. शङ्खः विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम्।
ऋते महापातकिनो गोहन्तुश्चावकीर्णिनः॥

[ बालस्य न प्रायश्चित्तम् ]

811. शङ्खः अतो बालतरस्यास्य नापराधो न पातकम्।
राजदण्डो न तस्यास्ति[1] प्रायश्चित्तं न विद्यते॥

812. शङ्खः ऊनैकादशवर्षस्य पञ्चवर्षात्परस्य च।
प्रायश्चितं चरेद्भ्राता पिता वान्यः सुहृज्जनः॥

[ अकामकृतायाः ब्रह्महत्यायाः प्रायश्चित्तम् ]

813. शङ्खः अकामकृते ब्रह्महा परिषदानुमतः[1] खट्वाङ्गी गर्दभाजिनी मृण्मयपात्रपतितशिष्टान्नभोजी कपालचिह्नध्वजी[2] स्वकर्मख्यापयंश्चरेद्भैक्षमेककालाहारः शून्या[3]गारपर्वतगुहावृक्षमूलनिकेतनः।
स एवं द्वादशे[4] वर्षे शुद्धिमाप्नोति,[5] अन्तरा वा[6] ब्राह्मणं मरणान्मोचयित्वा[7] गवां वा[8] द्वादशानां परित्राणात् सद्य एव वा[9]श्वमेधावभृथे स्नात्वा[10] पूतो भवति।

---

808. पं०सं०मा० (v.II.1), p. 290; प्रा०म०बी०, p. 15 [subst. for l.2 अकृत्वा वपनं तेषां प्रायश्चित्तं कथं भवेत्].
809. प०सं०मा०, (v.II.1), p. 290 [1 रक्षणार्थाय]; प्रा०म०नी०, p. 15.
810. प्रा०म०नी०, p. 15.
811. प्रा०म०नी०, p. 4 [1 also दातव्यं].
812. प्रा०म०नी०, p. 4; या०स्मृ०मि०, III. 243, p. 248.
813. नृ०प्र०दल०, p. 27 [2 om. कपालचिह्नध्वजी; 3 om. from शून्या upto एवं; reads द्वादशाभिवर्षैश्शुद्धिमाप्नोति; om. further]; & p. 33. [begins from

### [ ब्रह्महत्याप्रायश्चित्तम् ]

814. शङ्खः ब्राह्मणो ब्राह्मणं घातयित्वा तस्य शिरः कपालमादाय तीर्थान्यनुचरेदात्मनः पापं संकीर्तयन् द्वादशे वर्षे शुद्धिमाप्नोति। [ अथाश्वमेधं पश्यति ] तस्य दर्शनादेव शुद्धिमाप्नोति।

815. शङ्खः शिष्टानां भूमिदेवानां नरदेवसमागमे।
समेवावभृथे स्नात्वा ह्यश्वमेधेन शुद्ध्यति॥

### [ ब्रह्महत्यासमानां प्रायश्चित्तम् ]

816. शङ्खः कौटसाक्ष्यं तथैवोक्ता[1] निःक्षेपमपहृत्य च।
एतदेव व्रतं कुर्याद्धत्वा[2] च शरणागतम्॥

---

द्वादशे; 5 प्राप्नोति; 6, 8 & 9 om. वा; 10 स्थानाद् (for स्नात्वा) वा शुद्धिमाप्नुयात्]; प०सं०मा०, p. 56 [2 om. कपा to ध्वजी; 3 adds नदी before पर्वत; om. after आप्नोति]; & p. 68 [begins from द्वादशे; 5 प्राप्नोति: 7 om. मरणान्; 8 om. वा; 10 स्थानाद् (for स्नात्वा).]; म०पा०मद०, p. 797 [reads from द्वादशे; 3 adds नदी after शून्यगार; 5 प्राप्नोति; 6 om. वा; 7 om. मरणान्; 10 om. वाश्वमेधा]; या०स्मृ०अ०, III. 244, p. 1057 [reads from अन्तरा वा; 8 om. वा]; & III.252, p. 1066 [1 परिषदोऽनुमते; adds नदी after गुहा; 4 एव; and adds गोसहस्रं दत्त्वा द्वादशवर्षे; 8 om. बा०; 10 स्नानेन]; या०स्मृ०मि०, III.244, p. 250 reads from द्वादशे; 5 प्राप्नोति; 7 om. मरणान्; 9 om. वा०; 10 स्थानाद् (for स्नात्वा)]. & p. 250 [from अश्वमेधा; 10 गत्वा तत्रानुज्ञानः स्नातः सद्यः पूतो भवति]; या०स्मृ०मि० III.246, p. 252 [readsK only नान्तरा वा ब्राह्मणं मोचयित्वा]; या०स्मृ०वि० (2) p. 94. [om. अकामकृते; om. कपा to ध्वजी; reads स्वकर्मविख्यापयन्; 3 adds नदी after शून्यागार] & p. 95 [reads only सद्य एवाश्वमेधावभृथे स्नात्वा पूतो भवति]; fol. 101 [only अन्तरा वा ब्राह्मणान्मरणान्मोचयित्वा].

814. या०स्मृ०वि०, (2), p. 96.

815. नृ०प्र०दल०, p. 33.

816. प०सं०मा० (v.II.11) p. 97 [1 तथा कृत्वा; 2 त्यक्त्वा (for हत्वा).]; या०स्मृ०श०, III, 261. p. 100.



### [ द्विजसर्पादिवधे ब्रह्मवधसमानव्रतम् ]

817. शङ्खः हत्वा द्विजस्तथा[1] सर्पौ[2] जलेशयबिलेशयौ।[3]
सप्तरात्रं तथा कुर्याद्व्रतं ब्रह्मवधे[4] तु यत्॥

### [ सुरापानप्रायश्चित्तम् ]

818. शङ्खः सुवर्णस्तेनः प्रकीर्णकेश आर्द्रवासा[1] आयसं मुसलमादाय राजानमुपतिष्ठेत्।

819. शङ्खः सुरापोऽग्नितप्तमस्पृश्यमुदकं पिबेत् स तेन निर्दग्धकायः शुद्धिमाप्नोति।

820. असुरामद्यपायी चान्द्रायणं चरेत्।

### [ सुरापानगुरुतल्पगमनप्रायश्चित्तम् ]

821. शङ्खः अथवा बालचीरवासाः सुरापः खट्वाङ्गी गुरुतल्पक- गश्च ब्रह्महत्याव्रतमेव चरेयातां तौ तावता कालेन शुद्धिमाप्नुतः।

### [ अनृतवचने प्रायश्चित्तम् ]

822. शङ्खः आक्रोशानृतवादेषु[1] एकरात्रं त्रिरात्रं चोपवासः।

---

817. प०सं०मा०, (v.II.1), p. 86 [2 सर्पन्; 3 बिलेशयजलेशयौ; 4 ब्रह्महतेस्]; प्रा०म०नी०, p. 47; प्रा०वि०शू०, p. 240 [1 द्विजं; 2 सर्पं; subst for cd सप्तरात्रं तु कुर्वीत व्रतं ब्रह्महणस्तु चतु]; या०स्मृ०अ०, III.275, p. 1134 [only ab].

818. गौ०ध०सू०(परि०), p. 33; प्रा०प्र०भ०, p. 73 [1 om. आर्द्रवासा]; म०पा०मद० (IX), p. 827 [om. राजानमुपतिष्ठेत्].

819. या०स्मृ०वि०(2), p. 114.

820. प्रा०प्र०भ०, p. 40.

821. या०स्मृ०वि० (2), p. 114.

822. प०सं०गा०, (v.II.1), p. 459 [1 आक्रोशे]; प्रा०म०नी०, p. 121; या०स्मृ०अ०, III. 285, p. 1148 [एकरात्रमुपवासः].

### [ अस्तेयानि ]

823\. शङ्खः अस्तेयमग्नये काष्ठमस्तेयं च तृणं गवे।
कन्याहरणमस्तेयं यो हरत्यनलङ्कृताम्॥

### [ हिरण्यस्तेयप्रायश्चित्तम् ]

824\. शङ्खलिखितौ हिरण्यस्तेनो मासं गोमूत्रयावकं पिबेत्।

825\. शङ्खः हिरण्यस्तेनः पतितसव्यवहारी मित्रध्रुक् शरणागत-घाती प्रतिरूपकवृत्तिः।

826\. शङ्खः यस्य यस्य तु वर्णस्य वृत्तिच्छेदं[1] समाचरेत्।
तस्य तस्य वधे[2] प्रोक्तं प्रायश्चित्तं समाचरेत्॥
अपहृत्य तु वर्णानां भूमिं[3] विप्रः प्रसादतः।
प्रायश्चित्तं वधः[4] प्रोक्तं ब्राह्मणानुमते चरेत्॥
गजाश्वस्यापहरणे[5] मणीनां रजतस्य च।
धनापहरणे चैव कुर्यात्संवत्सरव्रतम्॥
तिलधान्यान्नवस्त्राणां शय्यानामामिषस्य च।
संवत्सरार्धं कुर्वीत व्रतमेतत्समाहितः॥
शूद्रान्पशूंश्चापहृत्य प्राजापत्यं समाचरेत्।
गुडकार्पासधान्यानि सर्पिर्लवणमेव च॥

823\. प्रा०म०नी०, p. 72.

824\. या०स्मृ०वि० (2), p. 12; [मासं वा गोमूत्रं यावकं पिबेयुरेवं शुद्ध्येयुः]; या०स्मृ०शू०, III.265, p. 101.

825\. प्रा०म०नी०, p. 72; प्रा०वि०शू०, p. 347.

826\. प०सं०मा० (v.II.1), p. 268 [om. l.1-4; 5 तथा धान्यस्यापहारे; om. l.9-10; 6 तृणेक्षु काण्डतक्राणां; 7 एतद्; 8 अन्धानां; 9 कुसुमस्य च]; प्रा०म०नी०, p. 72 [reads only first four lines; 1 वृत्युच्छंदं]; प्रा०वि०शू०, p. 346 [om. l.1-2; 3 विप्रो भूमिं 4 वधे; 5 तथा धान्यस्यापहारो; om. l.9-10; 6 काण्ड (for काष्ट); 7 एतद्; 8 गन्धानां; 9 कुसुमस्य]; & p. 347-348 [reads only first four lines; 2 वधप्रोक्तं; 3 transp. भूमिं and विप्रः; 4 वधप्रोक्तं]; या०स्मृ०अ०, III.268, p. 1111 [om. last two lines].



तृणेषु[6] काष्ठतक्राणां रसानामपहारकः।
मासमेकं[7] व्रतं कुर्याद्गन्धानां[8] सर्पिषां तथा॥
लवणानां गुडानां च मूलानां कुङ्कुमस्य[9] च।
मासार्धं तु व्रतं कुर्यादेतदेव समाहितः॥
लोहानां वेदलानां च सूत्राणां चर्मणां तथा।
एकरात्रं व्रतं कुर्यादेतदेव समाहितः॥

### [ गुरुतल्पगतौ प्रायश्चित्तम् ]

827\. शङ्खः गुरुतल्पगस्तप्तमायसं शयनमुपसंविशेत्, क्षुरेण वा शिश्नं सवृषणमुत्कृत्याञ्जलावाधाय नैर्ऋतीं दिशमन्वेक्षमाणो व्रजेदाशरीरपातात् पूतो भवति।

828\. शङ्खलिखितौ एवं मातुलानी पितृष्व[1]सास्नुषाभगिनी[2]दुहितृगमने[3]-ष्वाचार्यदुहितरि च।

### [ सगोत्रागमने प्रायश्चित्तम् ]

829\. शङ्खः चाण्डालीं पुल्कसीं म्लेच्छीं स्नुषां च भगिनीं सखीम्।
मातापित्रोः स्वसारं च निक्षिप्तां शरणागतम्॥
मातुलानीं प्रव्रजितां सगोत्रां नृपयोषितम्।
शिष्यभार्यां गुरोर्भार्यां गत्वा चान्द्रायणं चरेत्॥

### [ पशुवधे अदत्तानां दाने च प्रायश्चित्तम् ]

830\. शङ्खः पशून्हत्वा तथा ग्राम्यान्मासं कुर्याद्विचक्षणः।
अदत्तानां तथा दाने तदर्धं तु विधीयते॥

### [ अदेयं दत्त्वा प्रायश्चित्तम् ]

827\. या०स्मृ०वि० (2), p. 126.

828\. प०सं०मा०, (v.II.1), p. 319 [1 मातृष्वसृ; 2 om. भगिनी; 3 गमने तथा-चार्यदुहितरि चान्द्रायणम्]; प्रा०प्र०भ०, p. 86 [1 स्वसृ; 2 पितृव्यस्त्रीदुहितृ-भागिनेयीगमनेष्वाचार्यदुहितृगमने च]; या०स्मृ०अ०, III.267-268, p. 1118 [om. एवं; 1 मातृष्वसृपितृस्व सृस्नुषादुहितृगमने। आचार्यभार्यादुहितरि च]; या०स्मृ०वि० (2), p. 126.

829\. स्मृ०मु०वै०, p. 887.

830\. प०सं०मा०, (v.II.1), p. 93 [om. l.2 & l.3]; या०स्मृ०अ०, III. 275, p. 1134.

831. शङ्खः अदेयं दत्त्वा तत्परावर्त्य त्रिरात्रमुपवसेत्।

[ अविक्रेयाणि ]

832. शङ्खलिखितौ वस्त्राश्वादीन्न विक्रीणीयादिति उक्त्वा सद्यः पततीत्याह।

[ सुरालवणादिविक्रये प्रायश्चित्तम् ]

833. शङ्खः धारयित्वा तुलां वक्रां विषमं[1] कारयन्वणिक्।
सुरालवणमद्यानां कृत्वा क्षीरस्य विक्रयम्॥
लाक्षायाश्चैव मांसस्य कुर्यादर्धं महाव्रतम्।
विक्रेता प्राणिनामब्दं तिलस्य च तथा चरेत्॥

[ अपण्यविक्रये प्रायश्चित्तम् ]

834. शङ्खलिखितौ शस्त्रबन्धनभूम्येकशफविक्रये चैतदेव। गृहपतिश्रयोद्यानारामसभाप्रपातडाकपुण्य[1]सेतुविक्रयं[2] कृत्वा तप्तकृच्छ्रमाचरेत्।[3]

[ क्रयविक्रये प्रायश्चित्तम् ]

835. शङ्खलिखितौ क्रयविक्रयदुष्टभोजनप्रतिग्रहेष्वनादिष्टप्रायश्चित्तेषु सर्वेषु चान्द्रायणं प्राजापत्यं वा।[1]

831. ध०ल०, p. 794; स०वि०प्र०, p. 281.

832. नि०प्र०नृ०वा०, p. 316.

833. प्रा०म०नी०, p. 113 [1 विषयां]; या०स्मृ०अ०, III. 268, p. 1115.

834. नृ०प्र०दल०, p. 126 [om. upto चेते; adds सुत after सेतु; 3 चरेत्]; प०सं०मा०, (v.II.1), p. 131 [as नृ०प्र०]; पूर्व०प्र०रु० fol. 8 [तत्र देवगृह]; प्रा०म०नी०, p. 114. [om. upto पुण्य; 2 सुत; 3 चरेत्]; या०स्मृ०अ०, III.267-268, p. 1113 [1 पूज्य-]; या०स्मृ०मि०, III. 268, p. 304, [as प्रा०म०].

835. प०सं०मा०, (v.II.1), p. 461 [1 च (for वा).]; स्मृ०मु०वै०, p. 916 & p. 931.



836. शङ्खलिखितौ मांसमधुजत्तुमधूच्छिष्टत्रपुसीसककृष्णलौहौदुम्बरपात्रविक्रये महासान्तपनम्।

[ विप्रस्य चाण्डालीगमने प्रायश्चित्तम् ]

837. शङ्खः अकामतस्तु यो विप्रश्चाण्डालीं यदि गच्छति।
तप्तकृच्छ्रेण शुद्ध्येत प्राजापत्यद्वयेन वा॥
कामतस्तु यदा विप्रश्चाण्डालीं यदि सेवते।
चान्द्रायणेन शुद्ध्येत प्राजापत्यद्वयेन वा॥

[ स्त्रीणां व्यभिचारे प्रायश्चित्तम् ]

838. शङ्खलिखितौ इच्छया व्यभिचारिणी परदारेषु पुंसो विहितमेनां चारयेत्।

[ अवकीर्णप्रायश्चित्तम् ]

839. शङ्खलिखितौ संवत्सरब्रह्मचर्यानुवृत्तौ ज्येष्ठायां चेदनियुक्तां गच्छेत्सोऽप्येतदेव कुर्यात्।

840. शङ्खः वैश्यायामवकीर्णः[1] संवत्सरं ब्रह्मचर्यं[2] त्रिषवणमनुतिष्ठेत्क्षत्रियाया[3] द्वे[4] वर्षे त्रीणि ब्राह्मण्यां वैश्यावच्छूद्रायां[5] ब्राह्मणपरिणीतायाम्।[6]

841. शङ्खलिखितौ गुप्तायां[1] वैश्यायामवकीर्णः[2] संवत्सरं [3]त्रिषवणमनुतिष्ठेत् क्षत्रियायां द्वे वर्षे ब्राह्मण्यां त्रीणि वर्षाणि।

836. प्रा०प्र०भ०, p. 120.

837. प०सं०मा०, (v.II.1), p. 308.

838. प्रा०म०नी०, p. 82.

839. या०स्मृ०शू०, III. 288, p. 104.

840. नृ०प्र०दल०, p. 89 [3 चानु°; 5 वैश्यायां]; प्रा०प्र०भ०, p. 89 [3 चानु°]; म०पा०मद० (IX), p. 887 [3 वानु°]; या०स्मृ०अ०, III.266, p. 1117; या०स्मृ०मि०, III.265, p. 285 [1 वैश्यायां; 5 वैश्यायां]; या०स्मृ०वि० (2), p. 128 [2 om. ब्रह्मचर्यं; 4 om. वर्षे; 6 om. from ब्राह्म to त्यायाम्].

841. नृ०प्र०दल०, p. 89 [1 शूद्रायां; 2 वावकीर्णः; 3 द्विवर्षं]; प०सं०मा० (v.II.11), p. 127; प्रा०प्र०नी०, p. 86 & 87; या०स्मृ०मि०, III. 280, p. 297 [3 adds तु before द्वे]; स्मृ०मु०वै०, p. 122.

